संस्कृत प्रचार पुस्तक माला सं० ४७

# संस्कृत-सम्भाषणम्

[ संस्कृत के अध्यापक - विद्यार्थी - समाज के लिये
दैनिक व्यवहारोपयोगी सरल - सरस
संस्कृत वार्तालापों का संग्रह ]

## प्रथम भाग

सार्वभौम संस्कृत प्रचार कार्यालय
वाराणसी

संस्कृत प्रचार पुस्तक माला

# संस्कृत-सम्भाषणम्

[ संस्कृत के अध्यापक-विद्यार्थी समाज के लिये व्यवहारोपयोगी सरल-सरस संस्कृत वार्तालापों का संग्रह ]

## प्रथम भाग


लेखक-

**वासुदेव द्विवेदी शास्त्री**

( सम्पादक-संस्कृत प्रचार पुस्तक माला )



**सार्वभौम संस्कृत प्रचार कार्यालय**

वाराणसी

# आवश्यक निवेदन

कार्यालय द्वारा संस्कृत सीखने के इच्छुक जनों को सरलता एवं मनोरंजन के साथ संस्कृत सिखाने तथा संस्कृतसमाज में संस्कृत को दैनिक व्यवहारोपयोगा बनाने की दृष्टि से जो अनेक पुस्तकों के प्रकाशन की योजना बनाई गई है, उसी के अन्तर्गत इस पुस्तक का प्रकाशन किया जा रहा है। संस्कृत शिक्षा की वर्तमान व्यवस्था में न तो छात्रों को समुचित रूप से अनुवाद ही सिखाने का विधान है और न तो उन्हें संस्कृत में वार्तालाप करने में कुशल बनाने की ही कोई प्रक्रिया अपनाई गई है। इसका परिणाम यह होता है कि शास्त्री-आचार्य आदि उच्च कक्षाओं में पढ़ने वाले छात्र भो दैनिक जीवन के विविध प्रसंगों एवं व्यवहारों में संस्कृत का समुच्चित प्रयोग नहीं कर पाते। इस अयोग्यता के कारण वे स्वयं तो लाञ्छित होते ही हैं संस्कृत को भी लाञ्छित करते हैं और विकास के स्थान पर उसके ह्रास का कारण बनते हैं। यह अवस्था न केवल छात्रों की ही है अपितु बहुत से अध्यापक भी इसी कोटि में आते हैं। वे अनेक विषयों में उच्च कोटि के विद्वान हो सकते हैं पर व्यावहारिक संस्कृत का स्वयं प्रयोग करने तथा विद्यार्थियों से प्रयोग कराने में सर्वथा उदासीन देखे जाते हैं। वे इसे अपने लिये न तो आवश्यक कर्तव्य ही समझते हैं और न इससे लज्जा का ही अनुभव करते हैं।

परन्तु यह सब कुछ होते हुए भी यदि इन छात्रों एवं शिक्षकों के सम्मुख कोई उपयोगी साधन रखा जाय और उनसे अनुरोध किया जाय तो उनमें कुछ छात्र एवं अध्यापक ऐसे अवश्य निकल सकते हैं जो इस कमी को दूर करने की ओर ध्यान दें और प्रयोग द्वारा संस्कृत भाषा के प्रचार में सहयोगी बन सकें।

इसी दृष्टि से हमने इस पुस्तक का निर्माण किया था जो अब श्री रंग मन्दिर वृन्दावन के अध्यक्ष विद्वद्वरेण्य, १००८ स्वामी श्री गोवर्द्धन रंगाचार्य जी महाराज के कृपापूर्ण सहयोग से प्रकाशित होकर संस्कृत समाज की सेवा में प्रस्तुत हो रही है। इसके लिये हम स्वामीजी महाराज तथा उनके परामर्शदाताओं के अत्यन्त आभारी हैं।

इस पुस्तक के विभिन्न प्रकरण तथा विभिन्न प्रसंगों से संबन्धित संभाषण या वार्तालाप किस कोटि के हैं और हमारे उद्देश्य की पूर्ति में कितने सहायक हो सकते हैं इसका निर्णय विद्वज्जन ही कर सकते हैं। यदि इस सम्बन्ध में कुछ विद्वानों के सुझाव प्राप्त हुए तो हम द्वितीय संस्करण में इसे अधिक उपयोगी बनाने का प्रयत्न करेंगे। प्रस्तुत पुस्तक में संभाषणों को सरल एवं सुबोध बनाने की दृष्टि से सन्धियों का बहुत ही कम प्रयोग किया गया है।

आशा है संस्कृत के अध्यापक एवं छात्रगण इस पुस्तक का उपयोग एवं प्रचार कर हमारी सदिच्छा एवं सेवा को सफल बनाने की कृपा करेंगे।

विनीत
लेखक

रथयात्रा १९३२ वि०
२९ जून १९७६ ई०

* वाग्देवतायै नमः *

# संस्कृत-सम्भाषणम्

## १. सम्भाषण का महत्त्व

प्रथमः मित्रवर ! अत्र आगच्छ । क्षणं वार्तालापं कुर्वः । चिरात् मिलितोऽसि ।

द्वितीयः आगच्छामि । परं त्वं तु संस्कृते एव सदा वदसि ।

प्र० तेन का हानिः अस्ति ?

द्वि० हानिः नास्ति । परं संस्कृते वक्तुं मम अभ्यासः नास्ति ।

प्र० कथम् ? त्वं तु शास्त्रिकक्षायां पठसि ?

द्वि० अवश्यं पठामि । उत्तीर्णश्च भवामि । परं संस्कृते वक्तुं मम योग्यता नास्ति । यदि अधिकं वदामि, अशुद्धं वदामि ।

प्र० किं तव विद्यालये संस्कृते न वदन्ति जनाः ।

द्वि० न वदन्ति । केऽपि न वदन्ति । सर्वे मातृभाषायां वदन्ति ।

प्र० किम् अध्यापका अपि न वदन्ति ।

द्वि० न वदन्ति न च छात्रान् वक्तुं शिक्षयन्ति ।

प्र० किं छात्राः अपि न वदन्ति ?

द्वि० यदि अध्यापका एव न वदन्ति तदा छात्राणां का कथा ! मूलं नास्ति कुतः शाखा ?

प्र० यथार्थं वदसि । यदि अध्यापकाः आरम्भात् एव अनुवादम् अशिक्षयिष्यन्, अनुवादम् अलेखयिष्यन्, अशुद्धीः अशोधयिष्यन् तथा छात्रैः सह संस्कृते अवदिष्यन्

प्रथमः तदा अवश्यं छात्राणां संस्कृतभाषणे रुचिः अभविष्यत् उत्साहश्च अवर्द्धिष्यत ।

द्वितीयः अन्यच्च, छात्रेषु अपि उत्साहो न दृश्यते ।

प्र० तस्य किं कारणम् ?

द्वि० एतदेव, यत् न तान् कोऽपि वक्तुम् शिक्षयति न वा प्रेरयति न च प्रोत्साहयति ।

प्र० आश्चर्यम् ! विद्यालयेषु ईदृशी स्थितिः अस्ति ?

द्वि० अन्यच्च । यदि कश्चन वक्तुं साहसं करोति तदा अन्ये छात्राः तम् उपहसन्ति—पण्डितो जातः इति । अथ यदि काचित् अशुद्धिर्भवति तदा तु तस्य दुर्दशैव जायते । सर्वे तं भर्त्सयन्ति, निन्दन्ति च ।

प्र० धिक् धिक् ! महतः कष्टस्य विषयोऽयम् ।

द्वि० मित्र ! भवतः ईदृशी योग्यता केन कारणेन जाता ? कमपि मन्त्रं जानासि ?

प्र० सखे, अत्र मन्त्रः कारणं नास्ति । मम गुरवः सदा माम् अनुवादं शिक्षयन्ति स्म, मया सह सदा संस्कृते एव वदन्ति स्म, संस्कृते एव च मामपि वादयन्ति स्म । तेन कारणेन मम एषा योग्यता जाता ।

द्वि० सदा ते वदन्ति स्म ?

प्र० एवम्, पठने, पाठने, वार्तालापे, प्रश्ने, उत्तरे, आज्ञाप्रदाने सदैव ते संस्कृते वदन्ति स्म । विद्यालयेऽपि, वहिरपि ।

द्वि० अथ यदि तव अशुद्धिः भवति स्म ?

प्र० तदा मां वोधयन्ति स्म । वत्स, एवं वक्तव्यम्, एवं न वक्तव्यमिति ।

द्वि० तस्य कारणमपि बोधयन्ति स्म ।

प्रथमः सम्यक् प्रकारेण बोधयन्ति स्म। पृच्छन्ति स्म च-बुद्धम् ? ज्ञातम् इति ?

द्वितीयः कोपं न कुर्वन्ति स्म ?

प्र० कोपस्य का वार्ता भोः ? ते तु प्रसन्ना भवन्ति स्म। धन्यवादं च ददते स्म—साधु वदसि इति।

द्वि० तदा भाग्यवन्तः तेषां विद्यार्थिनः आसन् भवन्तश्च। सम्प्रति अहमपि स्वविद्यालये एतदर्थं प्रयत्नं करिष्यामि।

प्र० नूनं प्रयत्नं करोतु। भाषणेनैव भाषणशक्तिः वर्द्धते। अल्पकालेन भवान् सुयोग्यः वक्ता भाषणकर्ता च भविष्यति। अस्तु पुनर्मिलिष्यावः। इदानीं साधयामस्तावत्।

द्वि० मित्र ! परं मम तु एतत् निवेदनमस्ति यत् भवान् विद्यालये-विद्यालये गत्वा तथा प्रयत्नं करोतु यथा सर्वेषु विद्यालयेषु ईदृशी रीतिः प्रचलिता स्यात्।

प्र० मम निवेदने अध्यापका ध्यानं दास्यन्ति किम् ? असम्भव-मेतत् !

द्वि० पुनः पुनः प्रर्थनया अवश्यमेव ध्यानं दास्यन्ति। तेन तेषामपि लाभो वर्तते।

प्र० भवतु। यथाशक्ति अवश्यं प्रयतिष्ये।

द्वि० अनुगृहीतोऽस्मि। नमस्काराः। पुनः दर्शनं देयम्।

# विद्यार्थी की दिनचर्या

गुरुः देवकुमार !

देवकुमारः एष आगच्छामि । आदिश्यताम् किं कार्यं वर्तते ?

गुरुः कार्यं किमपि नास्ति। अद्य तव दिनचर्यां ज्ञातु-मिच्छामि । कदा किं कार्यं करोषि इति ।

देव० गुरुदेव ! मम दिनचर्या तु नियमिता नास्ति तथापि भव-ताम् आज्ञया श्रावयिष्यामि ।

गुरुः अवश्यं श्रावय। यदि कोऽपि दोषो भविष्यति, अहं कथयिष्यामि ।

देव० महती कृपा । तदा तु उचितं वा अनुचितं वा सर्वं निवे-दयिष्यामि ।

गुरुः आम्, सर्वं निवेदय, तदैव संशोधनं भविष्यति तत्र ।

देव० तर्हि पृच्छन्तु भवन्तः। तदनुसारेण अहम् उत्तरं दास्यामि ।

गुरुः अस्तु । कथय, प्रातःकाले कदा उत्तिष्ठसि ?

देव० अहं प्रातःकाले चतुर्वादने उत्तिष्ठामि ।

गुरुः स्वयं जागर्षि अथवा कश्चन जागरयति ?

देव० कदाचित् स्वयमेव जागर्मि, कदाचित् च पितृचरणाः जागरयन्ति ।

गुरुः सदैव चतुर्वादने एव जागर्षि ?

देव० नैव, कदाचित् पञ्चवादनमपि जायते ।

गुरुः भवतु । तेन न काऽपि हानिः । ततः परं किं करोषि ?

देव॰ ततःपरं मुखं प्रक्षाल्य किञ्चित् पठामि, आवृत्ति च करोमि । तदनन्तरं शौचं गच्छामि, दन्तधावनं करोमि, स्नानं करोमि, सन्ध्यावन्दनं करोमि तथा जलपानं करोमि ।

गुरुः जलपानं केन वस्तुना करोषि ?

देव॰ कोऽपि नियमः नास्ति । गुडं वा, शर्करा वा, चणकं वा, चायम् वा दुग्धं वा मिष्टान्नं वा यदेव सुलभं भवति तेनैव जलपानं विधीयते ।

गुरुः शोभनं करोषि । भोजने जलपाने वा वस्तुविशेषे आग्रहो न कर्तव्यः ।

देव॰ ततः परं पाककार्ये संलग्नो भवामि ।

गुरुः स्वयमेव पाकं करोषि ?

देव॰ आम्, स्वयमेव करोमि । यदा कदा कश्चन सहायकोऽपि भवति ।

गुरुः किं किं पचसि ?

देव॰ ओदनं, रोटिकां, शाकं, द्विदलं तथा यदा कदा कृशरान्नं च ।

गुरुः एतदेव तु सर्वेषां सामान्यं दैनिकं भोजनम् ।

देव॰ आम् श्रीमन् । ततः परं भुक्त्वा, पितरं भोजयित्वा, वस्त्रं परिधाय, पुस्तकानि च गृहीत्वा विद्यालयं गच्छामि ।

गुरुः विद्यालयं पदातिरेव गच्छसि यानेन वा ?

देव॰ निश्चितं नास्ति । प्रायः साइकिलयानेन गच्छामि, तदभावे बसयानेन, तस्यापि अभावे पादाभ्यां गच्छामि ।

ततश्च दशवादनमारभ्य चतुर्वादनपर्यन्तं विद्यालये स्थित्वा घण्टिकानुसारेण अध्ययनं करोमि।

गुरुः तदन्तरं कदा गृहं निवर्तसे ?

देव० चतुर्वादनानन्तरं तत्कालमेव गृहं निवर्ते अथवा विद्यालये क्रीडित्वा किञ्चित्कालानन्तरम्। ततो जलपानं, विश्रामः भ्रमणं, क्रीडा वार्तालापादिकं च जायते।

गुरुः इदं सर्वं सायङ्कालिकं कृत्यं वर्तते। तत्पश्चात् ?

देव० तत्पश्चात् दीपकं प्रज्वाल्य पुनरपि पठनं लेखनं च प्रारभे।

गुरुः कियत्कालं पठसि ? कदा च भोजनं करोषि ?

देव० सपाद-नव वादनं यावत् पठामि ततो भोजनं करोमि, अनन्तरं कपाटं पिदधामि। कपाटं पिधाय दीपकं निर्वापयामि। निर्वाप्य ईश्वरस्मरणं करोमि। ततश्च शयितुं गच्छामि।

गुरुः एषा एव ते दिनचर्या ?

देव० एषा एव मे दिनचर्या अस्ति। इतः परं यदा कदा वस्तूनि क्रेतुम् आपणमपि गच्छामि। यदा कदा पितुः आज्ञया चलचित्रमपि पश्यामि। कदाचित् च भाषणानि श्रोतुं सभासु अपि गच्छामि।

गुरुः अथ पुस्तकालयं वाचनालयं वा न गच्छसि ?

देव० एतद् द्वयं तु मम विद्यालये एव अस्ति। तत्रैव पुस्तकं संवादपत्राणि च पठामि। यदा कदा वहिरपि गच्छामि।

गुरुः तर्हि शोभना ते दिनचर्या। अहं प्रसन्नोऽस्मि। गच्छ, एवमेव नियमितां दिनचर्यामाचरन् सफलो भविष्यसि।

देव० तथापि यदि काचित् त्रुटिःस्यात्, निर्दिश्यताम्। अहं तस्याः परिमार्जनं करिष्यामि।

गुरुः त्रुटिस्तु काऽपि नास्ति। परं यदि प्रातः जागरणसमयेऽपि ईश्वरस्मणं करोषि, गुरुजनवन्दनां करोषि तथा स्वल्पमपि व्यायामं करोषि तदा इयं ते दिनचर्या अत्युत्तमा भविष्यति।

देव० गुरो, वक्तुं विस्मृतं मया। प्रातः ईश्वरस्मरणं तथा गुरुजनवन्दनां तु अहं सर्वदैव करोमि। परन्तु व्यायामं कर्तुं मम अभ्यासः नास्ति। इतः परं भवतां निर्देशात् तस्यापि अभ्यासं करिष्यामि।

गुरुः तदा समीचीनतरं भविष्यति। गच्छ।

देव० अभिवादये श्रीचरणेषु।

☆

# अवकाशदिन के कार्यकलाप

गुरुः भोः इदानीं छात्राः किं कुर्वाणाः सन्ति ?

छात्रः गुरो ! अद्य अवकाशदिनं वर्तते। तेन सर्वे छात्राः यथेच्छं स्वे स्वे अभीष्टे कर्मणि संलग्नाः सन्ति।

गुरुः कस्मिन् कस्मिन् कर्मणि संलग्नाः सन्ति ?

छात्रः केचित् गृहसम्मार्जनं कुर्वन्ति।

गुरुः किं प्रतिदिनं गृहसम्मार्जनं न कुर्वन्ति ?

छात्रः कुर्वन्ति, परन्तु अद्य विशेषरूपेण कुर्वन्ति। पुनश्च केचित्

वस्त्रप्रक्षालनं कुर्वन्ति, केचित् विशेषपाकं कुर्वन्ति, केचित् विश्राम्यन्ति, केचित् क्रीडन्ति, केचित् च वृथैव इतस्ततो भ्रमन्तः अवकाशसुखम् अनुभवन्ति।

गुरुः अन्ये छात्राः कुत्र गता? अनेके न दृश्यन्ते!

छात्रः अन्ये छात्राः स्वस्वकार्यार्थं वहिर्गताः सन्ति। केचन खाद्य-वस्तूनि क्रेतुं हट्टं गताः, केचन केशकर्तनार्थं क्षौरशालां गताः। कश्चन वस्त्रसेवनार्थं सूचीकारगृहं गतः। केचन मित्राणि मिलितुं गताः। अवकाशे वहूनि कार्याणि भवन्ति।

गुरुः केचन गृहं न गताः?

छात्रः अवश्यमेव गता भविष्यन्ति। सम्यग् न जानामि।

गुरुः अथ स बटुकः न अवलोक्यते? कुत्र गतः सः?

छात्रः गुरो, स क्वचित् लुक्कायितः शयानो भविष्यति येन कोऽपि तस्य निद्राभङ्गं न कुर्यात्।

गुरुः ईदृशः तस्य स्वभावः?

छात्रः आम् श्रीमन्, स अतीव निद्रालुः अस्ति। अष्टौ घण्टाः शेते।

गुरुः अथ स अस्वस्थो वालकः कुत्र अस्ति?

छात्रः स औषधार्थे औषधालयं गतः स्यात् इति संभावयामि।

गुरुः अथ तव किमपि बहिः कार्यं नास्ति?

छात्रः ममापि अस्ति। अद्य लेखनकाले मम हस्तात् लेखनी भूमौ पतिता त्रुटिता च। तां दर्शयितुं निर्मापयितुं च अहमपि आपणं गन्ता अस्मि।

गुरुः तर्हि ममापि लेखनीं दर्शयेः। इयमपि शोभनं न लिखति सम्प्रति।

छात्रः अथ च मम वस्त्राणि अपि रजकगृहे दातव्यानि सन्ति, यानि च दत्तानि तानि आनेतव्यानि सन्ति। तदहं त्वरितमेव गच्छामि।

गुरुः केचन छात्राः चलचित्रमपि द्रष्टुं गता भविष्यन्ति।

छात्रः गता भविष्यन्ति परं गुप्तरूपेण।

गुरुः गुप्तरूपेण कथम्?

छात्रः भवतामेव भयात्।

गुरुः मम भयात्? अहं तु कदापि न निवारयामि। परन्तु यदि चलचित्रं धार्मिकं स्यात्, ऐतिहासिकं स्यात्, शिक्षाप्रदं च स्यात् तदा।

छात्रः भवतु। यदा सर्वे आगमिष्यन्ति तदा ज्ञातं भविष्यति, के कुत्र गता आसन् इति।

## शयन-जागरण का समय

रमेशः सुरेश, इदानीमपि जागर्षि? कदा शयिष्यसे?

सुरेशः अहं तु एतावन्तं कालं प्रतिदिनं जागर्मि।

रमेशः तर्हि शेषे कदा?

सुरेशः यदा निद्रा आयाति।

रमेशः कदा तव निद्रा आयाति?

सुरेशः निश्चितं नास्ति। परं प्रायेण द्वादशवादनाद् अनन्तरमेव।

रमेशः तर्हि प्रभाते पुनः कदा जागरिष्यसि?

सुरेशः यदा निद्राभङ्गो भविष्यति।

रमेशः कदा ते निद्राभङ्गो जायते?

सुरेशः तदपि निश्चितं नास्ति । कदाचित् चतुर्वादने एव कदाचित् च अष्टवादने एव ।

रमेशः तर्हि तव शयनस्य जागरणस्य च कोऽपि निश्चितः समयः नास्ति ।

सुरेशः नैव, कोऽपि निश्चितः समयो नास्ति ।

रमेशः अन्ये छात्राः कदा शेरते कदा च जाग्रति ?

सुरेशः तेषामपि कश्चन नियमो नास्ति । तेऽपि अनियतकालमेव शेरते, अनियतकालमेव च जाग्रति । अथ भवतां शयनस्य जागरणस्य च कीदृशो नियमः ?

रमेशः अहन्तु रात्रौ दशवादने अवश्यमेव शये, प्रातश्च चतुर्वादने जागर्मि अवश्यमेव ।

सुरेशः एवं वा ? दशवादने भवतो निद्रा आयाति ?

रमेशः अवश्यमेव । मम तु शय्या वा भवतु भूमिर्वा, यदैव पतामि तदैव निद्रा आयाति ।

सुरेशः अथ जागर्षि कदा ?

रमेशः चतुर्वादने । मम तु एष सार्वकालिको नियमः ।

सुरेशः अस्माकं तु न कोऽपि ईदृशो नियमः ।

रमेशः परन्तु स्वास्थ्यदृष्ट्या इदं शोभनं नास्ति । जीवनं च अव्यवस्थितं भवति । दिनचर्या अपि छिन्नभिन्ना जायते ।

सुरेशः . तर्हि वयमपि तथैव शयितुं जागर्तुं च प्रयतिष्यामहे यथा भवन्तः कुर्वन्ति । दशवादने शयिष्यावहे चतुर्वादने च जागरिष्यामः ।

रमेशः अवश्यं तथैव प्रयतन्ताम् । तेन महान् लाभो भविष्यति । गीतायामपि भगवता श्रीकृष्णेन कथितम्—

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥

# मित्र को सबेरे उठाना

आनन्दः सुभाष ! प्रातःकालो जातः, कियत्कालं शेषे ?

सुभाषः किं प्रातःकालो जातः ?

आ० अथ किम् ? इदानीमपि रात्रिः अस्ति किम् ।

सु० मया एवमेव ज्ञातम् ।

आ० मनाक् मुखम् उद्घाट्य पश्य ।

सु० अहो सत्यमेव प्रातःकालो जातः ।

आ० तत् किमहं मिथ्या वदामि ।

सु० सखे, रात्रौ मया विलम्बेन शयनं कृतम् अत एव प्रातः काले निद्रा न भग्ना ( त्रुटिता ) जाता ।

आ० कथं विलम्बेन शयनं कृतम् ?

सु० अधीयानः ( पठन् ) आसम् ।

आ० प्रतिदिनं तु पठसि एव ।

सु० नहि, रात्रौ एकं नूतनं पुस्तकं पठन् आसम् ।

आ० तत् पुस्तकं यदि प्रातरेव अपठिष्यः तदा ते का हानिः अभविष्यत् ?

सु० तत् पुस्तकं प्रातरेव परावर्तयितुं प्रतिज्ञाय एकस्मात् मित्रात् याचित्वा आनीतवान् आसम् । अत एव रात्रौ पठनं परमावश्यकं जातम् । इदानीं परावर्तयिष्यामि ।

आ० इदं रहस्यं वर्तते रात्रौ जागरणस्य !
अस्तु, भूयसी वेला जाता । उत्तिष्ठ इदानीम् । नित्य-क्रियां च सम्पाद्य आवश्यके कार्ये निरतो भव ।

★

# सबेरे बालकों को जगाना

अरे जागृत जागृत, सूर्योदयः खलु जातः !
कृष्णमूर्ते, कियत् कालं शयिष्यसे, उत्तिष्ठ ।
किशोरी, किं ते प्रातःकालो न जातः ?
अरविन्द, अद्यापि तव निद्रा न भग्ना ?
केशव, पुनरपि रात्रिः आगमिष्यति ।
प्रमोद, किं ते शौचबाधाऽपि न जायते ?
जयन्त, जागरितोऽपि पुनः शयितुमिच्छसि ?
बलदेव, बलादुत्थापनेनैव उत्थास्यसि किम् ?
सुरेश, सूर्योदयेऽपि ते ईदृशो घर्घरनादः ?
उदय, इदानीमपि ते शयनकालो न समाप्तः ?
दयालो, दुग्धानयनबेला अतिक्रामति ।
मुरारे, मुखमाच्छाद्य शयनेन रात्रिर्न भवति ।
कुमार, कदा गृहसम्मार्जनं करिष्यसि ?
विनायक, विद्यार्थिनामपि ईदृशी निद्रा ?
अशोक, अद्य किमपि करणीयं नास्ति किम् ?
कृष्णा, कस्त्वां प्रतिदिनं जागरयिष्यति ?
श्याम, इदानीमपि सुप्यसि ?
अरे कुंभकर्ण, कदा ते निद्राभङ्गो भविष्यति ?

# गुरु की सहायता करना

छात्रः गुरो, अभिवादयेऽहं श्रीचरणेषु ।
गुरुः आयुष्मान् भव । कदा आगतोऽसि ?
छात्रः अद्यैव आगतोऽस्मि ।
गुरुः कुतः ?
छात्रः गृहादेव । अथ गुरुचरणाः कदा आगताः ?
गुरुः अहं ह्यः आगतवान् ।
छात्रः परिवारो न दृश्यते ।
गुरुः न, परिवारः न आगतः ।
छात्रः तर्हि एकाकिन एव भवन्तः सम्प्रति ।
गुरुः ओम्, एकाकी एव अस्मि ।
छात्रः भृत्योऽपि कश्चन नास्ति ?
गुरुः इदानीं नास्ति, आगमिष्यति श्वः परश्वो वा ।
छात्रः तदा भवतां कष्टमेव वर्तते इदानीम् ?
गुरुः आम्, किञ्चित् कष्टं तु वर्तते एव ।
छात्रः तर्हि आवश्यकं कार्यं निर्दिश्यताम् । अहं सर्वं सम्पादयिष्यामि ।
गुरुः त्वं किं किं कार्यं करिष्यसि ?
छात्रः गुरो ! सर्वं कर्तुं शक्नोमि । गृहं सम्मार्जयिष्यामि, पात्राणि प्रक्षालयिष्यामि, कूपात् जलम् आहरिष्यामि, आपणात् वस्तूनि च आनेष्यामि ।
गुरुः सदृश एवायं भावः तव कुलस्य शीलस्य च । तर्हि अनुष्ठीयतां सर्वम् । एतावदेव तु इदानीं करणीयमस्ति ।

छात्रः अथ यदि भवन्तः आदेशं दास्यन्ति तदा पाकमपि पक्ष्यामि ।

गुरुः पाकमपि पक्तुं जानासि ?

छात्रः कथं न । स्वकीयं भोजनं तु अहं पचाम्येव ।

गुरुः किं भोजनं पचसि ?

छात्रः ओदनं द्विदलं शाकं रोटिकां च । एतानि एव पक्तुमभ्यासो वर्तते । इतोऽधिकं पक्तुं न जानामि ।

गुरुः एतावदेव ममापि पर्याप्तं भविष्यति । परन्तु इन्धनं मत्समीपे स्वल्पमेव अस्ति ।

छात्रः किम् इन्धनं भवत्समीपे अस्ति ? काष्ठं वा कोकिला वा तुषा वा ?

गुरुः काष्ठमेव मम समीपे वर्तते ।

छात्रः तदा यत् न्यूनं भविष्यति तत् अहं दास्यामि ।

गुरुः अस्तु अन्यत् सर्वं पश्चात् कुर्वीथाः । प्रथमं त्रिचतुरान् घटान् जलमानय येनाहं शौचं स्नानं सन्ध्यावन्दनादिकं च विदधामि ।

छात्रः ततः परम् ?

गुरुः ततः परं हट्टात् एकसेटकं तण्डुलम्, अर्धसेटकं गोधूम-चूर्णम्, एकपादं द्विदलम् तथा एकैकपादं आलूकं पटोलकं च आनयेः ।

छात्रः अन्यत् किमपि ?

गुरुः आम्, पञ्चविंशत्या पणैः तैलम्, दशभिः पणैः चायपत्राणि, पञ्चदशभिः पणैः शर्करां च आनयेः, ततः परं पाकारम्भं कुर्याः ।

छात्रः यथा आदिशन्ति भवन्तस्तथैव करोमि । निश्चिन्ताः तिष्ठन्तु । एकहोराभ्यन्तरे एव सर्वं सम्पादयामि ।

गुरुः काचित् त्वरा नास्ति। ससुखं सर्वं सम्पादयेः। अथ त्वमपि अत्रैव मया सह भुञ्जीथाः। सङ्कोचो न विधेयः।

## कष्ट में मित्र की सहायता

रविः सखे श्रीकृष्ण ! अद्य मम स्वास्थ्यं शोभनं नास्ति। किञ्चित् साहाय्यं विधीयताम्।

श्रीकृष्णः अरे, अद्य किं ते जातम् ? ह्यस्तु स्वस्थ एवासीः।

रविः आम्, ह्यः स्वस्थ एवासम्। परन्तु अद्यैव स्वास्थ्यं किञ्चिद् विगुणितं जातम्।

श्रीकृष्णः किं कष्टमनुभूयते ?

रविः अनेकानि कष्टानि सन्ति। उदरे आध्मानं वर्तते, शिरसि पीडा वर्तते। सर्वाणि अङ्गानि त्रुटयन्ति। महत् आलस्यं वर्तते। उत्थातुमपि उत्साहो न भवति।

श्रीकृष्णः कथं खलु इदं सर्वं जातम् ? गतदिने कश्चन व्यतिक्रमो जातः ?

रविः न कोऽपि। यथापूर्वमेव सर्वमनुष्ठितम्।

श्रीकृष्णः रात्रौ समीचीना निद्रा असीत् ?

रविः नैव, रात्रौ समीचीना निद्रा नागता।

श्रीकृष्णः तत् कथम् ?

रविः इदानीं मम गृहे मत्कुणानां मशकानां च महान् उपद्रवो वर्तते।

श्रीकृष्णः एवं वा ?

रविः आम्, तेनैव अनेकदिवसेभ्यो मम रात्रौ सुखनिद्रा नास्ति। कदाचित् सुप्तः, कदाचित् अर्धसुप्तः, कदाचित् च जाग्रत् एव निशां गमयामि ।

श्रीकृष्णः आम् ज्ञातम् । सर्वस्यापि कष्टस्य तर्हि एतदेव मूलं वर्तते। यदा रात्रौ गाढनिद्रा नायाति तदा शरीरस्य ईदृशी एव स्थितिर्भवति ।

रविः सम्भवति इदम् । तर्हि तस्य निवारणाय किं विधेयम् ?

श्रीकृष्णः तस्य निवारणाय तु मशकहरी एव शोभनः उपायः। तस्या उपयोगेन मत्कुणेभ्यः मशकेभ्यश्चापि सम्यक् सुरक्षा भवति ।

रविः अन्यः कश्चन उपायो नास्ति ?

श्रीकृष्णः कथं न । कीटनाशकानि औषधानि अपि लभ्यन्ते । तेषां प्रयोगेणापि एतेषां विनाशो भवति ।

रविः वाढम् । तर्हि अद्यैव तदर्थं प्रयतिष्ये ।

श्रीकृष्णः अवश्यं प्रयत्नः क्रियताम् । इदानीं तावत् उत्थाय, शौचं कृत्वा, मुखप्रक्षालनं च विधाय तुलसीपत्रस्य चायं पिव । तेन ते अवश्यं काचन शरीरे स्फूर्तिः, मनसि प्रसन्नता, शिरसो लाघवञ्च भविष्यति ?

रविः वाढम्, तर्हि तस्यैव प्रबन्धं करोतु ।

श्रीकृष्णः इदानीमेव करोमि मित्र । तावत् शौचादिकं विधीयताम् । अग्रेऽपि पुनः यद् आवश्यकं स्यात् तत् निःसंकोचं निवेदनीयम् । सर्वमहं सम्पादयिष्यामि ।

रविः भृशम् अनुगृहीतोऽस्मि । यथासमयं सर्वं निवेदयिष्यामि इदानीं तु एतावदेव पर्याप्तमस्ति, नमस्काराः ।

# मित्र से सहायता की याचना

प्रथमः मित्रवर ! तव समीपे कानिचित् पणानि वर्तन्ते किमु ?

द्वितीयः अवश्यमेव वर्तन्ते । कानिचित् रूप्यकाणि अपि सन्ति ।

प्रथमः नहि, रूप्यकाणां मम आवश्यकता नास्ति । पणानि एव इष्यन्ते ।

द्वितीयः कति वा पणानि इष्यन्ते ?

प्रथमः पञ्चविंशतिः त्रिंशद् वा ।

द्वितीयः किमर्थं भोः ?

प्रथमः अस्ति किञ्चित् कार्यम् ।

द्वितीयः कथनीयं नास्ति किम् ?

प्रथमः कथं न । किञ्चित् जलपानाय आनेतुमिच्छामि ।

द्वितीयः अरे, इदानीं पञ्चविंशत्या त्रिंशता वा पणैः किं लप्स्यते ? पञ्चाशता अपि एकं शोभनं लड्डुकं न लप्स्यते ।

प्रथमः नाहं लड्डुकभक्षणस्य अभ्यासी । अहन्तु शुद्धं गुडमेव आनेतुमिच्छामि । तन्मे द्वित्राणि दिनानि चलिष्यति ।

द्वितीयः शोभनस्ते विचारः । परन्तु इदानीं मम सकाशादेव गृहीत्वा जलपानं विधेहि । गुडादिकं पश्चाद् आनयेथाः ।

प्रथमः परं मम ग्रहणेन ते अल्पं स्यात् ।

द्वितीयः तेन किम् ? जलपानेन उदरपूर्तिः क्रियते किम् ? आगच्छ, सहैव प्रातराशं कुर्वः । अल्पम् अल्पं विभज्य आवाम् उभौ अपि तृप्तौ भविष्यावः ।

प्रथमः चलतु भवान् । एष अनुपदमेव आगच्छामि ।

□

# मित्र का आतिथ्य करना

मित्रम् प्रमोद !

प्रमोदः आज्ञापयन्तु, किं कार्यम् अस्ति ?

मित्रम् अरे भृशं परिश्रान्तोऽस्मि। किञ्चित् चायं पाययिष्यसि ?

प्रमोदः कथं न, अवश्यं पाययिष्यामि।

मित्रम् स्वयं निर्मास्यसि वा आपणात् आनेष्यसि ?

प्रमोदः यथा भवताम् आदेशः। अहं तु उभयं कर्तुं समर्थोऽस्मि।

मित्रम् स्वयं निर्मास्यसि चेत् शोभनमेव भविष्यति।

प्रमोदः अहमपि एतदेव विचारयामि।

मित्रम् अपि सर्वा चायसामग्री वर्तते ?

प्रमोदः प्रायः वर्तते एव। दुग्धं वर्तते एव, शर्कराऽपि वर्तते एव। केवलं चायपत्राणि आनेतव्यानि भविष्यन्ति।

मित्रम् तानि दूरे लभ्यन्ते वा ?

प्रमोदः नहि, निकटे एव लभ्यन्ते।

मित्रम् तर्हि शोभनमेव।

प्रमोदः अथ चायपाने भवन्तः आर्द्रकम् एलां मरिचं वा रोचयन्ति ?

मित्रम् कुतो न ? तेन तु चायं स्वादिष्ठमेव भवति लाभकरं च।

प्रमोदः तर्हि एतदपि सर्वं सहैव आनयामि।

मित्रम् परं तेन महान् विलम्बः स्यात्।

प्रमोदः नैव, एतदपि सर्वं समीपे एव सुलभं वर्तते। त्वरितमेव सर्वमानीय चायं च निर्माय भवते समर्पयामि।

मित्रम् गच्छ शीघ्रम्। तावद् अहमपि हस्तपादौ मुखं च प्रक्षाल्य श्रान्तिम् अपनयामि।

प्रमोदः विश्रामाय किञ्चिद् आसनं ददामि ?

मित्रम् ददातु। एकम् आसनम्, उपधानं च एकं ददातु।

# अतिथि का स्वागत-सत्कार

आतिथेयः  महोदयाः ! भवतां जलपानाय किम् आनयानि ?

अतिथिः  यत् सुलभं भवेत् ।

आतिथेयः  चायं गृह्णन्ति भवन्तः ?

अतिथिः  कोऽपि विरोधः नास्ति परन्तु इदानीं न इच्छति मनः ।

आ०  भर्जितं चणकं भवान् रोचयते ?

अ०  रोचये, परन्तु गरिष्ठं भवति तत् ?

आ०  तर्हि शर्करायाः रसं रचयामि ?

अ०  किं किं निषेधामि ? रसः अपि तु अनुकूलः न भवति ।

आ०  तर्हि सङ्कोचस्य का आवश्यकता ? यदेव रुचिकरं स्यात् तदेव कथनीयम् । मिष्टान्नं तु किञ्चित् ग्रहीतुं शक्यते ?

अ०  ओम् शक्यते ।

आ०  किञ्चित् लावणिकमपि ?

अ०  यथा इच्छा भवतः ।

आ०  भवतु नाम । तत्कालं प्रवन्धं विदधामि । अथ भोजनं भवते विशेषरूपेण किं रोचते ?

अ०  कोऽपि आग्रहः नास्ति । ओदनं रोटिका वा सर्वं रोचते । परन्तु प्रायेण वयं दिने ओदनं रात्रौ च रोटिकां भक्षयामः ।

आ०  अस्माकमपि तथैव अभ्यासः अस्ति ।

अ०  तर्हि सुतरां प्रियं नः । मदर्थं पृथक् कष्टं कर्तव्यं न भविष्यति ।

आ॰ आः किमिदं कथयति भवान्? कष्टं किं भविष्यति। सौभाग्येनैव भवादृशां सेवाया अवसरो लभ्यते। अयं सुदिवसो मे अद्य।

अ॰ इदं तु सौहार्दं वर्तते भवताम्।

आ॰ तावद् भवन्तः उपानहौ उन्मुच्य, वस्त्राणि अवतार्य, हस्तपादौ च प्रक्षाल्य आसन्दिकायां सुखमुपविशन्तु शय्यायां वा विश्रम्यताम्। तावदहं सर्वं सुख-सौविध्यं परिकल्पयामि।

## नवीन अतिथि का स्वागत-सत्कार

गृहस्थः कुतः शुभागमनं श्रीमताम्?

अतिथिः अहं तु पाटलिपुत्रात् आगतोऽस्मि।

गृ॰ श्रीमतां शुभनाम ज्ञातुं शक्नोमि?

अ॰ अवश्यम्। मां जनाः प्रियव्रत शर्मा इति कथयन्ति।

गृ॰ एवम्। नाम तु श्रीमतां मया श्रुतमासीत्। परं दर्शनमेव न कृतवान् आसम्। अद्य दर्शनमपि जातम्।

अ॰ ममापि वहोः कालात् अत्र आगन्तुं उत्कण्ठा आसीत्।

गृ॰ महान् अनुग्रहः कृतः। आयान्तु, उपविशन्तु, अलङ्कुर्वन्तु च आसनमिदम्। अन्यत् च आवश्यकं निर्दिशन्तु। नित्यक्रिया समाप्ता वर्तते?

अ॰ न खलु। केवलं शौचात् निवृत्तोऽस्मि। अन्यत् सर्वं तु अवशिष्टमेव वर्तते। मार्गे अवसरो न लब्धः। सुविधाऽपि न आसीत्।

गृ॰ तर्हि अवशिष्टं सर्वम् अनुष्ठीयताम्। दन्तधावनं भवन्तः निम्वस्य कुर्वन्ति वब्बूलस्य वा?

अ० दन्तधावनं तु मह्यं मधूकस्य एव हितकरं भवति। परन्तु अभावे सर्वमपि गृह्यते।

गृ० आः अभावस्य तु अत्र प्रश्न एव नास्ति। अनेके मधूकवृक्षाः अत्र वर्तन्ते। त्वरितं त्रोटयित्वा आनाययामि। अन्यच्च यत् यत् आवश्यकं अनुकूलं च वस्तुजातं भवेत् तत् निःसङ्कोचं निवेदनीयम्।

अ० अस्तु, नितराम् अनुगृहीतोऽस्मि।

गृ० अत्र अनुग्रहः कः ? भवतामेव इदं सर्वं वर्तते। न खलु अस्माकं किमपि भवद्भिः परकीयमिति मन्तव्यम्।

※

# पूर्वपरिचित अतिथि का स्वागत-सत्कार

प्रथमः अगच्छन्तु आगच्छन्तु भवन्तः। नमस्करोमि।

द्वितीयः नमस्काराः नमस्काराः।

प्रथमः आर्य ! परिचित इव प्रतीयते भवान् मम।

द्वितीयः अहमपि क्वचिद् भवन्तं दृष्टवानस्मि।

प्र० किं विश्वसंस्कृतसम्मेलने भवान् गतवान् आसीत् ?

द्वि० ओम्, गतवान् आसम्, दिनत्रयं च तत्र स्थितवान् आसम्।

प्र० तत्र भवान् भाषणमपि कृतवान् आसीत् ?

द्वि० ओम्, कमपि प्रस्तावमधिकृत्य भाषणमपि किञ्चित् कृतवान् आसम्।

प्र० तर्हि तत्रत्य एव आवयोः परिचयः अस्ति ।

द्वि० भवितुमर्हति इदम् ।

प्र० अथ इदानीमत्र भवतामागमनं केन प्रयोजनेन ?

द्वि० अस्ति किञ्चित् प्रयोजनम् ।

प्र० अस्तु, तर्हि सम्पाद्यतां कार्यम् । यदि ममापि योग्यं किञ्चित् कार्यं स्यात् तर्हि निःस्सङ्कोचं सूचनीयम् ।

द्वि० वाढम्, अवश्यं सूचयिष्यामि । अत्र तु भवान् एव मम बन्धुः सहायकश्च ।

प्र० न खलु वन्धुः सहायको वा । अहं तु भवदीयः सेवक एव । यथेच्छं नियोगेन अनुकम्पनीयोऽस्मि ।

द्वि० प्रथमं तावत् शौचं गन्तुमिच्छामि । शौचालय-व्यवस्था वर्तते ?

प्र० कथं न । द्वारस्य वामभागे शौचालयो वर्तते । तत्रैव जलपात्रमपि स्थापितं स्यात् । नलात् जलं गृहीत्वा शौचं गच्छन्तु ।

द्वि० कोऽपि शौचालये वर्तते वा ?

प्र० नहि, वहिर्भागे अर्गला दत्ता दृश्यते ।

द्वि० अथ पात्रं जलत्यागि तु नास्ति ?

प्र० नहि नहि, निर्भयो गच्छतु भवान् । पात्रं निर्दुष्टं वर्त्तते ।

द्वि० अथ मृत्तिकादिकं स्नानागारं च कुत्र वर्तते ?

प्र० स्नानागारं शौचालयस्य आसन्नमेव । तत्रैव मृत्तिका, दन्तधावनं, तैलं, फेनिलादिकं च लप्स्यते सर्वम् ।

द्वि० वस्त्रप्रसारणाय लङ्गनी वर्तते वा ?

प्र० वर्तते, वृहती वर्तते। तत्रैव सर्वाणि वस्त्राणि प्रसारयतु।

द्वि० वानराणां तु भीतिः नास्ति ?

प्र० नास्ति। अयोध्या वाराणसी वा इदं नास्ति भगवन्!

द्वि० अथ चौराणाम् ?

प्र० चौराणां भवितुमर्हति। तस्मात् सावधानतया स्थातव्यम्। शुष्काणि वस्त्राणि गृहे स्थापनीयानि। अन्यदपि किञ्चित् अपेक्ष्यते ?

द्वि० आम्! दर्पणम्, कङ्कतिका तथा पूजायै एकं कम्बलं कुशासनं वा अपेक्ष्यते। मम स्वकीयं गृहे एव परित्यक्तम्।

प्र० तस्य चिन्ता न कर्तव्या। अत्रापि सर्वमिदं लप्स्यते।

द्वि० भवतु। गच्छतु भवान्। सर्वं ज्ञातं मया।

प्र० अपि किञ्चित् ज्ञातव्यं प्रष्टव्यं वा अन्यदपि अवशिष्यते ?

द्वि० नहि नहि, यान्तु भवन्तः। अहमपि शीघ्रमेव आगच्छामि।

# विशिष्ट अतिथियों का स्वागत

गुरुः कुमार! द्रुतम् आगच्छ।

कुमारः एष आगतः। आदिश्यताम्। काऽपि नवीना वार्ता वर्तते किम् ?

गुरुः आम्, अद्य विद्यालये केचन विशिष्टा अतिथयः आगन्तारः सन्ति।

कुमारः काचित् सूचना आगता किम् ?

गुरुः आम्, पत्रम् आगतम्। पश्य। इदं वर्तते।

कुमारः तर्हि तेषां कृते कश्चन विशेषः प्रबन्धो विधेयः स्यात् ?

गुरुः नूनम् । विशिष्टानां कृते विशेषः कश्चन अपेक्ष्यते एव ।

कुमारः तद् आदिश्यताम् । किं किं विधेयमस्ति ? वयं सर्वे विधास्यामः ।

गुरुः प्रथमं तु अन्तः वहिः, उपरि अधस्तात् च सर्वत्र सम्यक् सम्मार्जना विधेया ।

कुमारः आम्, एतत्तु आवश्यकमेव ।

गुरुः पुनश्च शौचालयः मूत्रालयः स्नानागारम्, भोजनालयः, छात्रावासः अतिथिशाला चेति सर्वाणि स्थानानि, सर्वाणि सोपानानि, सर्वा नालिकाश्च सम्यक् परिष्कृताः स्वच्छाश्च विधातव्याः । अथ स्नानागारस्य पिच्छिलता अपि दूरीकर्तव्या । अन्यथा अङ्गभङ्गः स्यात् अतिथीनाम् ।

कुमारः गुरो, भृत्यस्तु अद्य नास्ति । गृहं गतो वर्तते ।

गुरुः अरे अद्य भृत्यस्य अपेक्षा न कर्तव्या । सर्वे छात्राः स्वयमेव सर्वं कुर्वन्तु ।

अथ च सर्वाणि भोजनपात्राणि, जलपात्राणि चायपात्राणि च सम्यक् प्रक्षाल्य वस्त्रेण च सम्प्रोक्ष्य समुज्ज्वलानि कर्तव्यानि ।

कुमारः गुरो ! ताम्बूलं तमालपत्रं च भक्षयित्वा अभ्यागतकैः यत् कोणेषु निष्ठ्यूतं निक्षिप्तं तस्य अपनयनं कथं विधीयेत ? तस्य रागस्तु कथमपि न गच्छति ।

गुरुः तदपि रूक्षया मार्जन्या उल्लिख्य जलेन यथाकथञ्चित् प्रक्षालनीयम् । वस्त्रेण वा गोपनीयं तत् । सुधालेपस्तु इदानीं न सम्भवति ।

कुमारः अथ जलपान-भोजनादि-विषये कीदृशी व्यवस्था विधेया ?

गुरुः सर्वाणि आवश्यकानि वस्तूनि आपणात् क्रीत्वा आनीय च स्थापनीयानि। आवश्यकतानुसारं तेषाम् उपयोगो भविष्यति।

कुमारः तर्हि जलपानार्थं किं किं आनेतव्यम् ?

गुरुः कानिचित् मिष्टान्नानि कनिचिन् लावणिकानि च वस्तूनि आनेतव्यानि। कानिचित् फलानि च। चायं तु तदैव निर्मास्यते। अन्यथा शीतं भविष्यति।

कुमारः परं तदानीं दुग्धं लभ्येत न वा ?

गुरुः अजादुग्धं तु लप्स्यते ! वह्व्यः विद्यालये चरन्ति। तेनैव चायं निर्मास्यते। कः परिचिनोति ? एकदा मया एवमेव कृतम्।

कुमारः नहि, इदानीमेव गोदुग्धं महिषीदुग्धं वा आनीय स्थापयामि। अजादुग्धस्य आवश्यकता न भविष्यति। अथ तेषां कृते भोजनं किं किं निर्मातव्यम् ?

गुरुः तेभ्यः किं किं रोचते इति वयं न जानीमः। तान् आपृच्छ्य यथा ते कथयिष्यन्ति तथा कल्पयिष्यामः।

कुमारः एवमेव भवतु। अन्यथा पूर्वपाचितं भोज्यं कदाचित् विनष्टं स्यात्। अथ विश्रामाय अपि व्यवस्था विधेया ?

गुरुः कुतो न ! भुक्त्वा मध्याह्ने कुत्र गमिष्यन्ति ? तदर्थं द्वित्राः खट्वाः पर्यङ्कानि वा शोभनानि रक्षणीयानि। परं तत्र मत्कुणा न स्युरिति सम्यग् निभालनीयम्।

कुमारः साधु स्मारितं भवता ! इदानीं बहवो दृश्यन्ते। अत एव ज्योतिषीमहोदया दूरादेव खट्वा नमस्कुर्वन्ति।

गुरुः श्रृणु, कदाचित् मोटरकारध्वनिः श्रूयते। ऐतेनैव ते आगच्छन्तो भवेयुः। सज्जा भवत। चलत द्वारे। तेषां स्वागतं करिष्यामः। सर्वे छात्रा उपस्थित्यै विज्ञापनीयाः।

कुमारः सर्वान् गत्वा विज्ञापयामि।

गुरुः पुनश्च श्रूयताम्। तेषु उपस्थितेषु यथा एकोऽपि छात्रः किञ्चित् अभद्रं न आचरेत्, अभद्रं वा न वदेत्, कलहं कोलाहलं वा न कुर्यात्, उद्धतो वा न चरेत्, मलिनं वस्त्रं वा न धारयेत् तथा बोधनीयाः सर्वे लघवो युवानश्च छात्राः।

कुमारः तथैव बोधयिष्यामि।

★

# गुरु से पाठ पढ़ना

गुरुः अये छात्राः, पाठं पठिष्यथ ?

शिष्याः ओम्, पठिष्यामः ।

गुरुः किं पुस्तकं पठिष्यथ ?

शिष्याः मूलरामायणम् ।

गुरुः कश्चित् पुस्तकं ददातु । देहि भोः पुस्तकम् ।

शिष्याः गृह्यताम् ।

गुरुः गतदिने कति श्लोकाः पठिताः ?

शिष्याः त्रयः श्लोकाः ।

गुरुः के के ?

शिष्याः ऊनविंशः विंशः एकविंशश्च ।

गुरुः अद्य कं कं श्लोकं पठिष्यथ ?

शिष्याः द्वाविंशं त्रयोविंशं चतुर्विंशं च ।

गुरुः अस्तु, पृष्ठं कतमत् वर्तते ?

शिष्याः त्रिंशं एकत्रिंशं च ।

अन्यशिष्यः मम पुस्तके तु त्रिंशे एकोनत्रिंशे च पृष्ठे इमे श्लोकाः सन्ति ।

शिष्याः भवितुमर्हति । तव पुस्तकं भिन्नं स्यात् ।

गुरुः पुस्तकम् उद्घाट्य दीयताम् ।

शिष्याः इदम् उद्घाटितं वर्तते ।

गुरुः श्लोकं वाचयतु कश्चित् । अद्य मम उपनेत्रं नास्ति ।

शिष्यः अहं वाचयामि ? अन्यो वा कश्चित् ?
गुरुः यः शुद्धं वाचयति, सुस्वरं वाचयति, सविरामं च वाचयति स एव वाचयतु ।

# छात्रों से पाठ सुनना

प्रथमः गुरो ! वयं पाठं पठिष्यामः ।
गुरुः गतदिनस्य पाठः कण्ठस्थीकृतः ?
प्रथमः यथाशक्ति कण्ठस्थीकृत एव ।
गुरुः अद्य परीक्षां कर्तुमिच्छामि । श्रावयिष्यथ ?
प्रथमः अहं श्रावयितुं शक्नोमि परन्तु अन्येषां सम्बन्धे न जानामि ।
द्वितीयः मम तु गतदिनस्य पाठः बुद्धौ एव न समागतः ।
तृतीयः अहमपि किञ्चित् न बुद्धवान् ।
चतुर्थः अहं तु बुद्धवान् परं कण्ठे करणाय अवसरः न मिलितः ।
पञ्चमः पाठकाले तु अहमपि सर्वं बुद्धवान् परं पश्चात् मम विस्मृतिः जाता ।
षष्ठः अहम् श्वः श्रावयिष्यामि । अद्य परित्यजन्तु माम् ।
सप्तमः मम तु गतदिने महती शिरोवेदना आसीत् । तेन पुस्तकमेव उद्घाट्य न दृष्टम् ।
अष्टमः अहम् अर्धं श्रावयितुं शक्नोमि ।
नवमः मम समीपे निजं पुस्तकं नास्ति । तेन कण्ठस्थीकरणे महती वाधा भवति । यदि मम निजं पुस्तकम् अभविष्यत् तर्हि सर्वेभ्यः अहम् अग्रे अभविष्यम् ।

दशमः गतदिने मया भ्रमात् अत्रैव पुस्तकं परित्यक्तम् ।

एकादशः मम पुस्तकं तु एकः छात्रः नीतवान् अस्ति । तेन परावर्तितं नहि । अन्यथा अहं अवश्यमेव अश्रावयिष्यम् ।

गुरुः तर्हि एवमेव पाठनं भविष्यति ! महती विडम्बना अस्ति । यदि बुध्यते एव नहि, कण्ठस्थ एव न क्रियते तर्हि पठनेन को लाभः ! यावत् अद्यावधि पाठितान् पाठान् न श्रोष्यामि तावत् अग्रे पाठं न पाठयिष्यामि ।

*

## पाठ्यपुस्तकों के सम्बन्ध में प्रश्नोत्तर

गुरुः गोविन्द ! तव कक्षायां कति पाठ्यपुस्तकानि सन्ति ?

गोविन्दः दश द्वादश वा पुस्तकानि वर्तन्ते ।

गुरु० सर्वाणि पुस्तकानि तव समीपे सन्ति ।

गो० नहि सर्वाणि न सन्ति ।

गु० कति सन्ति ?

गो० द्वित्राणि भविष्यन्ति । त्रिचतुराणि वा । अन्ततः पञ्चषाणि वा ।

गु० तर्हि अन्येषां कृते का व्यवस्था भविष्यति ? तानि क्रेष्यसि किम् ?

गो० क्रयणे तु बहूनि, रूप्यकाणि लगिष्यन्ति । तावत् इतस्ततो याचनस्य प्रयत्नं करोमि ।

गु० कुतश्चित् प्राप्तेः आशा वर्तते ?

गो० ओम् केचन दातुं कथितवन्तः सन्ति ।

गु० अथ यदि ते न दद्युस्तदा ?

गो० तदा कथञ्चित् रूप्यकाणां प्रबन्धं विधाय क्रयणाय यत्नं करिष्यामि ।

गु० तर्हि बहूनि रूप्यकाणि लगिष्यन्ति ?

गो० ओम्, सम्भवतः विंशतिः पञ्चविंशतिर्वा रूप्यकाणि अवश्यमेव लगिष्यन्ति ।

गु० अस्तु येन केनापि प्रकारेण पुस्तकानां शीघ्रं व्यवस्थां कुरु । अन्यथा पठने महती हानिर्भविष्यति । बहूनि दिनानि व्यतीतानि ।

गो० पाठशालायाः पुस्तकालयात् कतिचन पुस्तकानि न लब्धुं, शक्यन्ते ?

गु० दृष्ट्वा वदिष्यामि । यानि भविष्यन्ति तानि अवश्यं लब्धुं शक्ष्यते ? गच्छ इदानीम् । श्वः आगत्य पुनः प्रष्टव्यम् ।

गो० महती कृपा । अभिवादये ।

*

## छात्रावास में रहने के लिये अनुरोध

छात्रः गुरुवर्य ! अहं भवतां विद्यालये पठितुं कामये ।

गुरुः किं पठिष्यसि ?

छात्रः व्याकरणं वा साहित्यं वा पठितुमिच्छामि ।

गुरुः अत्र स्थास्यसि, गृहे वा स्थित्वा पठिष्यसि ?

छात्रः गृहेऽपि स्थित्वा पठितुं शक्नोमि ।

गुरुः गृहं तव समीपे एव वर्तते किम् ?

छात्रः आम्, समीपे एव वर्तते।

गुरुः अत्र आगमने कियान् कालो गच्छति ?

छात्रः केवलं पञ्चविंशतिः क्षणाः। यदि वेगेन चलामि तदा विंशत्या एव क्षणैः आगन्तुं शक्यते।

गुरुः तदा तु गमने आगमने वा अधिकः श्रमो नास्ति।

छात्रः अधिकः श्रमो नास्ति। परं गृहे स्थितौ अध्ययने महती बाधा भवति।

गुरुः कीदृशी बाधा ?

छात्रः बहुविधा बाधा अस्ति। मम गृहे बहवो बालकाः सन्ति। ते कदाचित् रुदन्ति, कदाचित् कोलाहलं कुर्वन्ति, कदाचित् पुस्तकमेव गृहीत्वा पलायन्ते, कदाचित् मसीमेव पातयन्ति कदाचित् च देहमेव आरोहन्ति।

गुरुः एषा एव बाधा अस्ति ?

छात्रः न खलु एषा एव। कदाचित् गृहस्यापि किञ्चित् कार्यं करणीयं भवति।

गुरुः तत् किं कार्यम् ?

छात्रः गुरो ! गृहस्था वयम्। गृहे गावः वृषभा महिष्यश्च सन्ति। ततः तेषामपि खादने पाने रक्षणे च किञ्चिद् ध्यानं दातव्यं भवति।

गुरुः तव गृहे अन्ये कार्यकर्तारः न सन्ति किम् ?

छात्रः सन्ति परं तेषु अनुपस्थितेषु ममापि किञ्चित् उत्तरदायित्वं भवति।

गुरुः अवश्यं भवति। गृहे स्थित्वा तस्य उपेक्षा शोभना न भवति।

छात्रः अन्यच्च। मम एकः वृषभः महान् दुष्टः अस्ति। सर्वदेव स रज्जुं छित्त्वा कीलं च उत्पाट्य सुदूरं पलायते। ततः तस्य अन्वेषणं ग्रहणं तथा आनयनं च एकं महाकठिनं कार्यं भवति।

गुरुः इयं तु महती बाधा अस्ति।

छात्रः तस्मादेव गृहे न स्थातुमिच्छामि। अत्रैव स्थित्वा पठितुं मया निश्चितम्।

गुरुः साधु निश्चितं त्वया। परं छात्रावासे स्थानं वर्तते न वा इति अनुसन्धाय अहं श्वः वदिष्यामि।

छात्रः अनुगृहीतोऽस्मि। अहं श्वः प्रभाते पुनः दर्शनं करिष्यामि।

## परिश्रम करने के लिये छात्र को प्रोत्साहन

अध्यापकः त्वं पठने परिश्रमं न करोषि, कथम् उत्तीर्णो भविष्यसि ?

छात्रः यथाशक्ति तु अवश्यं परिश्रमं करोमि।

अ० कदा करोषि ? अहं तु कदापि त्वां पठन्तं न पश्यामि।

छा० तदा किं कुर्वन्तं भवान् मां पश्यति ?

अ० कदाचित् खेलन्तं पश्यामि, कदाचित् शयानं पश्यामि, कदाचित् आलपन्तं पश्यामि, कदाचित् च भ्रमन्तं पश्यामि।

छा० भवान् तदा एव आगच्छति यदा अहं इमानि एव कार्याणि कुर्वाणो भवामि। मयि पठति भवान् कदाचित् आगतः एव न। इदानीं तु मम पठत एव अहोरात्रं गच्छति।

अ० मम दृष्टिपथे तु त्वं कदाचिदपि पठन् न पतितः। यदि पठसि तर्हि पठ। परिश्रमेण पठ। इतः परं शोभनं किं भविष्यति ?

## खेलने जाने के लिये मित्र से अनुरोध

किशोरः कौशल ! खेलितुं चलिष्यसि ?

कौशलः अवश्यं चलिष्यामि।

कि० आम् , खेलने तु तव मन एव लगति। तर्हि आगच्छ।

कौ० चलामि जलपानं कृत्वा । आगच्छ, किञ्चित् त्वमपि जलपानं कुरु।

कि० अहन्तु इदानीम् एव कृत्वा आगच्छामि।

कौ० अस्तु, अहमपि सज्ज एव जातः। चलितव्यम्। कन्दुकं वर्तते ?

कि० कन्दुकं तु मम वर्तते परं वायुः निर्गतः अस्ति। त्वं आत्मनः कन्दुकम् आनय।

कौ० कथं वायुः निर्गतः ?

कि० गतदिने खेलनकाले एकेन कण्टकेन कन्दुकम् अपविद्धम्।

कौ० अस्तु, तर्हि अवश्यमेव आनयामि। परं कदाचित् इदमपि अपविद्धं न जायेत।

कि० नहि, अद्य कण्टकानि अपनीय खेलिष्यामः।

कौ० तदा शोभनं भविष्यति। चलन्तु। अहं कन्दुकं गृहीत्वा अनुपदमेव आगच्छामि।

# विद्यालय चलने के लिये अनुरोध

वीरेन्द्रः सखे, विद्यालयं चलिष्यसि ?

ज्ञानेन्द्रः चलिष्यामि ।

वीरेन्द्रः तर्हि आगच्छ, सहैव चलावः ।

ज्ञानेन्द्रः क्षणं विरम्यताम् । यावद् भोजनं कृत्वा अगच्छामि ।

वीरेन्द्रः भोजनं न कृतवान् असि ।

ज्ञानेन्द्रः नैव ।

वीरेन्द्रः कथम् ?

ज्ञानेन्द्रः इदानीमेव रसवती सिद्धा अस्ति ।

वीरेन्द्रः तर्हि विलम्बं करिष्यसि ?

ज्ञानेन्द्रः कदापि नहि । केवलम् उपवेशनस्य विलम्वः अस्ति ।

वीरेन्द्रः एवम् ?

ज्ञानेन्द्रः अथ किम् ?

वीरेन्द्रः तर्हि गच्छ । तावद् गतदिनस्य अनुवादं लिखामि ।

ज्ञानेन्द्रः आगतोऽहम् । पश्य कियती शीघ्रता कृता ।

वीरेन्द्रः सत्यमेव अति शीघ्रं खादसि । अस्तु, वस्त्रं परिधेहि, पुस्तकानि गृहाण । अन्यथा विलम्वः भविष्यति ।

ज्ञानेन्द्रः क्षणेन सर्वं साधयामि, विलम्वः न भविष्यति ।

वीरेन्द्रः चल शीघ्रं चल ।

ज्ञानेन्द्रः चल । अरे प्रकोष्ठस्तु अपिहित एव परित्यक्तः ! तत् धावन् तालकं लगयित्वा आगच्छामि । अन्यथा कोऽपि हरिष्यति किञ्चित् ।

# चिरागत मित्र से कुशलप्रश्न पूछना

प्रथमः अहो आगम्यताम्, आगम्यताम्। चिराद् दृष्टा भवन्तः।

द्वितीयः ओम्, चिराद् आगतोऽस्मि।

प्र० किं विस्मृता एव वयं भवद्भिः ?

द्वि० न खलु विस्मृताः।

प्र० अयं मार्गं एव वा परित्यक्तो भवद्भिः।

द्वि० नहि नहि मार्गो न परित्यक्तः।

प्र० अथवा किमपि अपराद्धमस्माभिः ?

द्वि० सखे ! अधिकं मा लज्जयस्व। इदं सर्वं कारणं नास्ति।

प्र० तर्हि किं कारणमस्ति ?

द्वि० केवलं गृहप्रपञ्चे व्यस्तता एव कारणं वर्तते। तेन वहिर्गमनस्य अवसर एव न लभ्यते।

प्र० कार्यव्यस्तानां प्रायेण ईदृशी एव स्थितिर्भवति। परं मित्राणि अपि तु न विस्मरणीयानि ?

द्वि० सर्वथा उचितं कथयति भवान्। अतएव तु अद्य समागतोऽस्मि। कथयतु, अपि कुशलिनो भवन्तः सर्वे ?

प्र० प्रथमं स्वकीयं कुशलवृत्तं निवेद्यताम्। अपि स्वस्थौ मातापितरौ ?

द्वि० ओम् ओम्, मातापितरौ, भ्रातरः, भगिन्यः भ्रातुष्पुत्राश्च सर्वेऽपि सर्वथा कुशलिनः सन्ति।

प्र० अथ मदीया भ्रातृजाया ?

द्वि० साऽपि कुशलिनी, त्वदीयं च कुशलम् अनामयं च सदा पृच्छति।

प्रथम — एवं वा ? तर्हि भाग्यवन्तं खलु आत्मानं मन्ये ।

द्वितीय — अथ स्वकीयं कुशलं निवेदयतु भवान् ।

प्र० — निवेदनेन किम् ? अत्र स्थित्वा भवान् स्वयमेव सर्वं ज्ञास्यति । आगच्छतु, प्रथमं हस्तपादं प्रक्षालयतु, मुखमार्जनं करोतु, जलपानं करोतु, भोजनं च करोतु । तत्पश्चात् विश्रम्य यथेच्छं वार्तालापं करिष्यावः ।

द्वि० — वाढम् । इदानीं तु भवदधीनोऽस्मि । यथा यथा भवान् कथयिष्यति तथा तथा आचरिष्यामि ।

# मित्र के घर से विदा होना

अतिथिः — अद्य अहं गन्तुं कामये ।

गृहस्थः — कथं नु अद्यैव । श्वः परश्वो वा गच्छन्तु । कियन्ति दिनानि व्यतीतानि आगतस्य भवतः ?

अतिथिः — बहूनि व्यतीतानि । इदानीम् आज्ञा प्रदेया । गृहस्य परिजना अपि प्रतीक्षमाणाः भविष्यन्ति ।

गृहस्थः — सर्वदा गृहे एव तु निवासः क्रियते !

अतिथिः — सत्यमिदम् । परं गृहस्य कार्यभारः अपि तु महान् भवति । एकदिनस्यापि अवकाशः गृहस्थानां कृते दुर्लभः भवति ।

गृहस्थः — अस्तु, यद्येवम् आग्रहः वर्तते तर्हि गच्छन्तु । गमिष्यन्तं कः निवारयितुं शक्नोति ?

अतिथिः — नहि, आग्रहस्य काचिद् वार्ता नास्ति । कार्याधिक्यात् गन्तुमिच्छामि ।

गृहस्थः भवतु नाम। अहं तु भवतां कञ्चित् सत्कारं कर्तुं न पारितवान्, अनेकानि च कष्टानि जातानि।

अथितिः आः किमिदं ब्रवीति भवान्! महत् सुखम् अनुभूतं मया अत्र। नितराम् आनन्दमयानि दिनानि व्यतीतानि।

गृहस्थः अस्तु, कालातिपातो भवति। तद् गच्छन्तु भवन्तः। पुनश्च दर्शनं देयम्। यदि किमपि असौविध्यम् अनुभूतं स्यात् तर्हि तदर्थं क्षमाप्रदानेन अनुग्रहो विधेयः।

## मित्र के विलम्ब से आने पर

प्रथमः अरे कुत्र भवान् आसीत्? न जाने कियतः कालात् भोजनाय भवन्तं प्रतीक्षमाणः तिष्ठामि।

द्वितीयः मित्रवर! अहम् आगच्छन्नेव आसम् तावत् मार्गे मम एकः परिचितो जनो मिलितः। तेनैव सह वार्तालापे मम इयान् कालो यातः। क्षम्यताम्।

प्रथमः क्षमायाः प्रश्नः नास्ति। भोजनं शीतलं भवति खलु।

द्वितीयः तर्हि कथं न भवता भोजनं कृतम्? अहं पश्चात् आगत्य भोजनम् अकरिष्यम्।

प्रथमः नैतद् युज्यते मित्र! चिराद् आगतो भवान्। भवन्तम् अभोजयित्वा अपाययित्वा च कथमहं भोजनं कुर्याम्?

द्वितीयः पुनश्च सहभोजनस्य एकः अन्य एव आनन्दो भवति।

प्रथमः अत एव प्रतीक्षमाणः आसम्। तद आयान्तु, सहभोजनस्य आनन्दम् अनुभवावः।

# पुत्र को सावधान करना

पिता प्रकाश ! गृहे सावधानः तिष्ठेः ।

पुत्रः भवन्तः क्वचिद् वहिर्गच्छन्ति किम् ?

पिता आम् वहिर्गच्छामि ।

पुत्रः कदा पुनरागमिष्यन्ति ? कदा निवर्तिष्यन्ते ?

पिता रात्रौ ।

पुत्रः कतिवादने ?

पिता दशवादनपर्यन्तम् । अत एव कथयामि-सावधानस्तिष्ठेः । यदि गृहे शयनीयं स्यात् तर्हि अर्गलिकां दत्त्वा शयितव्यम् । अन्यथा कुक्कुरा विडाला वा गृहं प्रविशन्ति ।

पुत्रः अथ यदि वहिर्गच्छेयम् ?

पिता यदि वहिर्गच्छेस्तदा कपाटं पिधाय तालकं च दत्त्वा गच्छेः । वहिश्च नातिचिर तिष्ठेः । द्रुतमेव निवर्तेथाः ।

पुत्रः अथ यदि कश्चन जनो भवन्तं मिलितुं समागच्छेत् ?

पिता तदा तस्य किं नाम, किं स्थानं तथा किञ्च आगमन-प्रयोजनमिति सविनयं पृच्छेः लिखित्वा वा स्थापयेः ।

पुत्रः अथ यदि फोनघण्टिका वदेत् ?

पिता तदापि एतदेव प्रष्टव्यं लेखितव्यं च ।

पुत्रः अवगतं खलु सर्वम् । तथैव करिष्यामि । अथ अपरमेकं प्रष्टुमिच्छामि ।

पिता पृच्छ्यताम् ।

पुत्रः रात्रौ भवदर्थं पाकं करिष्यामि न वा ?

पिता न, मदर्थं पाको न विधेयः। अहं कदाचित् तत एव भोजनं कृत्वा आगमिष्यामि। जलादिकन्तु अवश्यं स्थापनीयम्।

पुत्रः अवश्यं स्थापयिष्यामि।

पिता भोः किञ्चिद् दीर्घशङ्का मे प्रतिभाति।

पुत्रः तर्हि शौचं गच्छन्तु। शङ्कां निर्वर्त्यैव यात्रा विधेया। अन्यथा मध्ये असौविध्यं स्यात्।

पिता रात्रौ यत् चणका अधिका भक्षिताः तस्यैव परिणामोऽयम्। अस्तु शौचं निर्वर्त्यैव गमिष्यामि। तावत् एकं रेक्सायानम् आनय। भाटकं च अत्रैव स्थिरीकुर्याः। अन्यथा तत्र विवादं कुर्यात् रेक्साचालकः।

पुत्रः तथैव करोमि। आगतमिदं रेक्सायानम्। एकरूप्यकं भाटकं दातव्यम्।

पिता अधिरोहामि। त्वमपि गच्छ। अध्ययनं कुरुष्व। वृथा वहिर्न गच्छेः। केनापि सह विवादं मा कुर्याः।

## स्वास्थ्य के लिये परिश्रम की आवश्यकता

माधवः केशव ! त्वं सर्वदा अस्वस्थः दृश्यसे ?

केशवः सत्यं कथयसि. अहं प्रायेण सर्वदा अस्वस्थः तिष्ठामि।

मा० तर्हि एतस्य कारणं किं वर्तते ?

के० किं कथयामि ? कारणम् अपि अहं सम्यक् कथयितुं न शक्नोमि।

मा० एवं प्रतीयते, त्वं स्वास्थ्यनियमानां पालनं न करोषि।

के० भवितुमर्हति इदम्।

मा० इदं तावत् निरूपय, सायं प्रातः भ्रमणं करोषि ?

के० कोऽपि नियमः नास्ति। सायंकाले यदा कदा आपणं गच्छामि।

मा० प्रतिदिनं व्यायामं करोषि ?

के० व्यायामं तु कदापि न करोमि।

मा० कदाचित् खेलितुं गच्छसि ?

के० खेलनस्यापि नियमः नास्ति। यदा मित्राणि आग्रहं कुर्वन्ति तदा गृहे एव चतुरङ्गेन मनोविनोदं करोमि।

मा० स्वहस्तेन गृहकार्यं किञ्चित् करोषि ?

के० नहि तदर्थं भृत्याः सन्ति।

मा० सर्वस्यापि अयं अभिप्रायः अस्ति यत् त्वं श्रमस्य किञ्चित् कार्यं न करोषि।

के० नैव, परिश्रमस्य तु किमपि कार्यं कर्तुं मम अभ्यासः नास्ति।

मा० इदमेव तव अस्वास्थ्यस्य मुख्यं कारणं वर्तते।

के० तर्हि मया किं कर्तव्यम् ?

मा० शृणु, त्वया दिनचर्यायां संस्कारः कर्तव्यः। प्रातः सायं च निर्मुक्तवायौ भ्रमणं कर्तव्यम्, कन्दुकादिना प्रतिदिनं खेलितव्यम्, गृहकार्याणि कानिचित् स्वहस्तेन कर्तव्यानि। एवं करणेन तव स्वास्थ्यं पर्याप्तं समीचीनं भविष्यति।

के० मित्रवर ! अद्य तव उपदेशेन वाढम् अनुगृहीतोऽस्मि। इतः परम् एवमेव आचरिष्यामि। धन्यवादा भवते।

# रहन-सहन सम्बन्धी दोषों का निवारण

विवेकः किशोर ! तव स्वभावः मनागपि मह्यं न रोचते।

किशोरः कथं भोः, मम स्वभावे को दोषः वर्तते ?

विवेकः अनेके दोषाः सन्ति। एकः दोषः अस्ति ?

किशोरः अनेके ! के के दोषाः सन्ति ते ?

विवेकः प्रथमस्तु अयमेव यत् त्वं स्वच्छतायाः उपरि ध्यानं न ददासि।

किशोरः कथं जानाति भवान् ?

विवेकः अरे, प्रत्यक्षमेव पश्यामि। प्रत्यक्षे किं प्रमाणम् अपेक्ष्यते ? प्रथमं तावत् स्वकीयं प्रकोष्ठमेव पश्य, कीदृशं मलिनं वर्तते।

किशोरः प्रकोष्ठस्तु अद्यैव सम्मार्जितः।

विवेकः अहो, सम्मार्जितस्य इयं दशा वर्तते ! एष अवकरो दृश्यते, एते पत्रखण्डाः पतिताः सन्ति, एतत् जालकं लग्नं वर्तते। इदमेव सम्मार्जनस्य लक्षणं विद्यते ?

किशोरः अथ अन्यः कः दोषः ?

विवेकः अन्यश्च अयं दोषो-यत् वस्तूनि अपि सुव्यवस्थितं न स्थापयसि। पुस्तकानि एव प्रक्षिप्तानि इव दृश्यन्ते। वस्त्राणि अपि एकत्रैव रजकवत् पुञ्जीकृतानि। दर्पणं, कङ्कतिका, तैलकूपी, पानपात्रम्, छत्रं पादुका चेति सर्वाणि अपि इतस्ततो विकीर्णानि सन्ति। कस्यापि वस्तुनः किमपि व्यवस्थितं स्थानं नास्ति।

किशोरः इदं तु यथार्थमेव कथयति भवान्। अन्यदपि निरूपयन्तु।

विवेकः किं किं निरूपयामि ? स्थानस्य सज्जा अपि वर्त्तमान-

जीवनचर्याया एकं महत्वपूर्णं कार्यमस्ति । तदपि त्वं न जानासि ।

किशोरः तत्र का मे त्रुटिः अस्ति, स्पष्टं कथयतु ।

विवेकः न तव प्रकोष्ठे किमपि चित्रं दृश्यते, नापि काचित् कलाकृतिः अवलोक्यते, नापि किञ्चित् सुभाषितं लिखित्वा स्थापितम्, न च द्वारे स्वागतवचनमेव ।

किशोरः एषा तु मम महती त्रुटिः अस्ति ।

विवेकः किमन्यत्, त्वं स्वकीये शरीरे अपि ध्यानं न ददासि । दर्पणे मुखं पश्य । कीदृशः भल्लूकवत् दृश्यसे !

किशोरः आम्, वहोः कालात् केशकर्तनं न कारितम् ।

विवेकः अन्यच्च । परिधानमपि ते शिथिलम् । अङ्गरक्षके वीटिका भग्नाः सन्ति । धौतवस्त्रं मुच्यमानमिव प्रतिभाति । दिनचर्यायां नियमितता नास्ति ! ईदृशेन स्वभावेन कथं खलु त्वं वर्तमानसमये जीविष्यसि स्थानं च लप्स्यसे ?

किशोरः मित्रवर ! साधु उपदिष्टं भवता । इतः परं सर्वत्र अहं सावधानो भविष्यामि । पुनर्यदि भवान् मां ईदृशं द्रक्ष्यसि तदा उपालभेथाः । इदानीं क्षमस्व मे दोषान् । नमस्करोमि ।

# भोजन के विषय में परामर्श

प्रथमः वन्धुवर, अद्य किं भोजनं पक्ष्यते ?

द्वितीयः यथा ते रोचते ।

प्रथमः नहि, यदेव भवते रोचते, तदेव पक्ष्यते ।

द्वितीयः तर्हि अद्य अपूपा एव पच्यन्ताम् ।

प्रथमः आः अपूपास्तु मह्यमपि वहु रोचन्ते परं सामग्री तु सर्वा नास्ति ।

द्वितीयः तर्हि शष्कुली-शाकं भवतु । यदि सम्भवति पायसं च ।

प्रथमः परन्तु शष्कुल्याः अपि कृते पर्याप्तं घृतमपेक्ष्यते । तत् नास्ति नः समीपे ।

द्वितीयः तर्हि ओदनं द्विदलं च भवतु । कतिचन रोटिकाश्च । यथा प्रतिदिनं भवति ।

प्रथमः अत्रापि द्विदले सन्देहो वर्तते । पर्याप्तं वर्तते न वा ?

द्वितीयः तर्हि प्रश्नस्य किं प्रयोजनम् ? यदेव वर्तते तदेव पक्तव्यम् ।

प्रथमः नहि, मया एवं चिन्तितम्—कदाचित् भवान् कृशरान्नं पक्तुं कथयेत्, ओदनं शाकं वा ।

द्वितीयः द्वयमपि समानमेव !

प्रथमः अथवा रोटिका शाकं च भवितुमर्हति ।

द्वितीयः यदि रोटिका एव पक्तव्या तर्हि तत्स्थाने अङ्गारककंटी भवतु भरित्रं च । रोटिका तु प्रतिदिनमेव पच्यते भक्ष्यते च ।

प्रथमः तर्हि अङ्गारकर्कटी केवला वा भरिता वा ?

द्वितीयः यदि भरिता भवेत् तदा किं वक्तव्यम् ? भरिता तु अतीव रुचिकरी भवति ।

प्रथमः सा तु ममापि अतीव प्रिया । इदानीमेव मे जिह्वायां जलमागतम् !

द्वितीयः चणकस्य सक्तवः सन्ति ?

प्रथमः सक्तवस्तु सन्ति । परं जवानी, जीरकम्, निम्बूकम्, मरिचम्, आम्लम् चेति सर्वोऽपि उपस्करः आनेतव्यो भविष्यति । एतद् विना कथं रुचिकरी स्यात् ।

द्वितीयः तर्हि अत्रापि काठिन्यमेव अस्ति । अथ गोह्लानि सन्ति ?

प्रथमः अहो, एतत्तु मम विस्मृतमेव । तानि तु पूर्वमेव समाप्तानि । इदानीं तु लप्स्यन्ते अपि न ।

द्वितीयः तर्हि सर्वं परित्यज्य चिपुटान्नमेव भक्षयामः । अत्र किमपि कर्मकाण्डमपि नास्ति । दधि तु लप्स्यते एव । न चेत् गुडेनैव भक्षयिष्यामः ।

प्रथमः हा धिक् । दधि विना चिपुटं कीदृशम् ? तत्रापि यदि माहिषं दधि भवति शर्करा च पर्याप्ता, तदैव चिपुटान्नभोजनस्य आनन्दो लभ्यते ।

द्वितीयः तर्हि सक्तव एव शोभनाः । लेह्यं निर्मीयताम् । यदि च किञ्चित् सन्धानं स्यात् तदपि आनीयताम् । शीघ्रता विधेया । विलम्बो भवति ।

प्रथमः मित्र ! प्रथमम् अपूपं चर्चयित्वा पश्चात् सक्तुभ्यः आत्मसमर्पणं तु मह्यं न रोचते । परं यथा भवतामादेशः ।

# रसोई में देरी

उमेशः रमेश, रसवत्यां विलम्वो वर्तते ?

रमेशः अधिकः विलम्वः नास्ति।

उमेशः कियान् विलम्वः अस्ति ?

रमेशः केवलम् अर्धघण्टायाः।

उमेशः किं सम्पन्नं किञ्च असम्पन्नं सम्प्रति ?

रमेशः सर्वं सम्पन्नमेव। ओदनं तु अवतारितं प्रसारितं च। शाकमपि प्रायः निष्पन्नमेव। लेह्यमपि च निर्माय स्थापितमेव।

उमेशः तर्हि विलम्वः कस्य अस्ति ?

रमेशः विलम्वः केवलं द्विदलस्य अस्ति।

उमेशः कथं द्विदले प्रतिदिनं विलम्वो भवति ?

रमेशः मन्ये, इदं सुपचं नास्ति। शीघ्रं गलति एव न।

उमेशः अस्तु, यथा अस्ति तथा अस्तु। शीघ्रं परिवेषय।

रमेशः परिवेषयामि। किं घण्टिकावादनस्य समयो जातः ?

उमेशः न जातः, परम् आसन्न एव वर्तते।

रमेशः एवम्, तर्हि शीघ्रता विधेया। जलं वर्तते ? पीठानि च स्थापितानि ?

उमेशः जलं तु नास्ति। पीठानि अपि न स्थापितानि।

रमेशः तर्हि जलं आनयतु भवान्। पीठानि च स्थापयतु। तावद् अहं सर्वं परिवेषयामि।

उमेशः अरे विरम्यताम् विरम्यताम्। घृतं तु विस्मृतमेव ?

रमेशः घृतं तापयितुं सम्प्रति अवसरो नास्ति। अद्य घृतं विनैव भुज्यताम्। श्वो द्विगुणितं भुञ्जीथाः। एहि, विलम्वं मा कुरु।

# पाकसम्बन्धो क्रियाकलाप

प्रथमः किं भोः किमपि भोजनीयं वर्तते ?

द्वितीयः किं भोक्तु मिच्छसि ?

प्र० यदेव लप्स्यते तदेव भोक्ष्यामि।

द्वि० बहूनि वस्तूनि सन्ति। जवः अस्ति, गोधूमः अस्ति........

प्र० अरे सिद्धमन्नं पृच्छामि। कश्चित् जवं गोधूमंवा भक्षयति ?

द्वि० सिद्धमन्नं तु किमपि नास्ति।

प्र० तर्हि शीघ्रं पचतु किञ्चित्। नितरां बुभुक्षितोऽस्मि।

द्वि० तदा भवान् अपि सहयोगं ददातु। ततः शीघ्रं सेत्स्यति रसवती।

प्र० तर्हि कथयतु भवान्, किं कार्यं करणीयं वर्तते ?

द्वि० बहूनि कार्याणि करणीयानि सन्ति।

प्र० परन्तु मम रसवतीं निर्मातुं तु न आयाति।

द्वि० अन्यत् कार्यं कर्तुं तु आगमिष्यति ?

प्र० कथं न, जलं भर्तुम् आयाति, अग्निं ज्वालयितुम् आयाति, तण्डुलं धावयितुम् आयाति, पिष्टकं स्वेदयितुं आयाति, शाकं कर्तितुम् आयाति तथा ...

द्वि० अथ रोटिकां वेल्लयितुम् आयाति ?

प्र० नहि इदमपि कर्तुं न आयाति। परं हस्तेन निर्मातुं शक्नोमि।

द्वि० अथ तण्डुलं प्रस्रावयितुम् आयाति ?

प्र० आम् यदि सन्दंशः, दर्वी, ऋजोसं च भविष्यति तदा नूनं प्रस्रावयितुं शक्ष्यामि।

द्वि० भोजनं परिवेषयिष्यति भवान् ?

प्र० परन्तु कः कियद् भक्षयति इति अहं न जानामि।

द्वि० अत्र सर्वेषां समान एव आहारः वर्तते। न कश्चित् अधिकं भक्षयति न कश्चित् अल्पम्। भवान् बुभुक्षितः अस्ति अतः स्वस्मै अधिकं परिवेषणीयम्।

## भोजन में शाक का अभाव असह्य

पिता अरे कुमार ! रसवती सम्पन्ना ?

पुत्रः सम्पन्ना एव।

पिता किं किं पाचितम् ?

पुत्रः ओदनं द्विदलं च।

पिता अथ शाकम् ?

पुत्रः शाकं तु न पाचितम्।

पिता कुतः ?

पुत्रः शाकं तु न आसीत् किमपि !

पिता आलूकानि तु आसन् एव।

पुत्रः आसन्, किन्तु स्वल्पानि, तानि च शुष्कप्रायाणि।

पिता तर्हि, आपणात् कथं न आनीतानि ?

पुत्रः मम समीपे द्रव्यं न आसीत्।

पिता तर्हि कुतश्चन याचित्वा आनेतव्यमासीत्। अस्माकं शाकविक्रेता तु उद्धारमपि ददाति।

पुत्रः शाकस्य स्थाने आम्रस्य लेह्यं निर्मितवान् अस्मि। मूलकश्चापि वर्तते। चलन्तु, अद्य एतेनैव भोजनं भवतु !

पिता चलतु, परं सायङ्काले शाकं न विस्मर्तव्यम्।

पुत्रः न विस्मरिष्यामि।

# एक आदर्श विद्यालय का परिचय

प्रथमः मित्रवर ! श्रूयते, तव विद्यालयः आदर्शविद्यालयः अस्ति ?

द्वितीयः आम् मित्रवर ! आदर्शविद्यालयः अस्ति ।

प्र० किं नाम्ना एव अथवा स्वरूपेणापि ?

द्वि० नहि भोः स्वरूपेण अस्ति । कदाचित् आगत्य पश्यतु भवान् ।

प्र० आगत्य कदाचित् द्रक्ष्यामि । तावत् मौखिकरूपेणैव किञ्चित् परिचयं देहि ।

द्वि० वाढम्, पृच्छतु भवान्, यत् यत् प्रष्टुमिच्छति ।

प्र० कियत्कक्षापर्यन्तं तव विद्यालये पाठनं भवति ?

द्वि० मध्यमापर्यन्तम् ।

प्र० कति अध्यापकाः पाठयन्ति ?

द्वि० सप्त अध्यापकाः पाठयन्ति । त्रयः प्रथमकक्षायां, चत्वारः मध्यमकक्षायाम् च ।

प्र० विद्यालये कति प्रकोष्ठाः सन्ति ?

द्वि० नव प्रकोष्ठाः सन्ति । तेषां सप्तसु कक्षाः प्रचलन्ति, एकः कार्यालयः अस्ति, तथा एकः पुस्तकालयः अस्ति ।

प्र० र्तीह प्रकोष्ठाः पर्याप्ताः सन्ति ।

द्वि० एवम्, कस्यापि वस्तुनः न्यूनता नास्ति ।

प्र० समाचारपत्रम् अपि किमपि आगच्छति ?

द्वि० कथं न, अनेकानि पत्राणि आगच्छन्ति पुस्तकालये ।

प्रथमः छात्राः पठन्ति ?

द्वितीयः ओम् छात्रास्तु समाचारपत्राणां पठनार्थं व्याकुलाः तिष्ठन्ति ।

प्रथमः छात्राः पुस्तकालयात् पुस्तकानि गृह्णन्ति ?

द्वितीयः आः पुस्तकार्थं तु छात्राः युध्यन्ति ।

प्रथमः खेलनाय क्रीडाप्राङ्गणं वर्तते ?

द्वितीयः न केवलं क्रीडाप्राङ्गणं, सर्वाणि क्रीडासाधनानि अपि सन्ति । सर्वेऽपि छात्राः प्रतिदिनं सायङ्काले खेलन्ति ।

प्रथमः वालकाः युवानश्च सहैव ?

द्वितीयः नहि नहि, वालानां यूनां च कृते पृथक् पृथक् क्रीडा-स्थानानि वर्तन्ते ।

प्रथमः पाठशालायां धर्मशिक्षायाः अपि प्रवन्धः अस्ति ?

द्वितीयः इदं तु पाठशालाया मुख्यं कर्तव्यं वर्तते । इदमेव न भविष्यति ?

प्रथमः कदा भवति, केन च रूपेण ?

द्वितीयः मम विद्यालये पादोन-दश-वादने प्रथमघण्टिका भवति । ततो दशवादने प्रार्थना भवति । ततः सपाद-दशवादने उपस्थितिगणना भवति । ततश्च सार्ध-दशवादने धर्मशिक्षा भवति । प्रतिसप्ताहं पर्यायेण एकैकः अध्यापकः धर्मशिक्षां ददाति । एतेन मध्यमापर्यन्तं सर्वे छात्राः धर्मस्य आवश्यकैः ज्ञातव्यविषयैः सम्यक् परिचिताः भवन्ति ।

प्रथमः इयं तु अतीव समीचीना व्यवस्था वर्तते । एतादृशी व्यवस्था तु कस्यामपि पाठशालायां न दृष्टिपथं गता । अथ छात्राणां कृते वृत्तेः का व्यवस्था वर्तते ?

द्वितीयः मम विद्यालयस्य अधिकाः छात्रास्तु वृत्तिं ग्रहीतुं न इच्छन्ति। ये वस्तुतः निर्धनाः छात्राः सन्ति ते एव गृह्णन्ति। तेऽपि विवशतया न तु प्रसन्नतया।

प्रथमः निमन्त्रणेऽपि छात्राः गच्छन्ति।

द्वितीयः निमन्त्रणस्य तु ते नाम एव श्रुत्वा घृणां कुर्वन्ति। सर्वे छात्राः स्वावलम्बिनः सन्ति स्वाभिमानिनश्च।

प्रथमः परीक्षाफलं कीदृशं भवति ?

द्वितीयः परीक्षाफलमपि अत्युत्तमं भवति ? यतः यथा अध्यापकाः पाठने परिश्रमं कुर्वन्ति तथैव छात्राः पठने परिश्रमं कुर्वन्ति। उभयोः सम्मिलितेन प्रयत्नेन परीक्षाफलं शोभनं भवति। प्रतिशतं नवतिश्छात्रा उत्तीर्णा भवन्ति।

प्रथमः परं छात्राः सन्ध्यावन्दनं तु न कुर्वन्तो भविष्यन्ति ? यतः आधुनिकेषु छात्रेषु सन्ध्यावन्दनं प्रति महती शिथिलता वर्तते।

द्वितीयः परन्तु मम विद्यालये शिथिलतां भवन्तः न प्राप्स्यन्ति। प्रातः काले सर्वे छात्राः यदा स्वे स्वे आसने उपविश्य पङ्क्तिबद्धाः सन्तः सन्ध्यां कुर्वन्ति तदा तत् अतीव रमणीयं दृश्यं भवति।

प्रथमः अथ सामाजिकेषु अपि कार्येषु छात्राणां प्रवृत्तिः भवति ?

द्वितीयः एवम्, विद्यालयस्य आसन्नेषु स्थानेषु यत् किञ्चित् सामाजिकं कार्यं भवति तत्र छात्राः पूर्णरूपेण सहयोगं ददते। एकं वाचनालयं तु मम विद्यालयस्य छात्राः स्वत एव संचालयन्ति।

प्रथमः परं गीतादिकं तु न गायन्तो भविष्यन्ति, वृद्धवैयाकरण-भयात् ?

द्वितीयः नहि भोः अस्माकं विद्यालयस्य अध्यापकाः संगीतद्वेषिणः न सन्ति। ते तु स्वयं गायन्ति। कथं छात्रान् निवारयिष्यन्ति ? यदाकदाचित् विद्यालये मनोरञ्जनस्य अपि कार्यक्रमः चलति। तत्र गीतादिकं यथेच्छं छात्राः गायन्ति।

प्रथमः अथ तमाल-ताम्बूल-भक्षणस्य कीदृशी अवस्था वर्तते ? चलति सम्यग् विद्यालये ? अध्यापकास्तु अवश्यमेव सेवमाना भविष्यन्ति ! तेषां सम्पर्कात् केचित् विद्यार्थिनश्च।

द्वितीयः भवितुमर्हति इदम्। परं विरला एव एतादृशा अध्यापकाः छात्राश्च।

प्रथमः तर्हि अतीव शोभनमिदम्। अथ लेखनविषये कीदृशी व्यवस्था ते विद्यालये ? अपि छात्राः प्रतिदिनं लिखन्ति किञ्चित् ?

द्वितीयः अवश्यं लिखन्ति।

प्रथमः ते स्वयमेव यथामति किञ्चित् लिखन्ति अथवा अध्यापकाः लेखयन्ति ?

द्वितीयः ते स्वयमपि लिखन्ति परं विशेषतः अध्यापका एव लेखयन्ति।

प्रथमः लिखितस्य संशोधनमपि सम्यक् कुर्वन्ति अध्यापकाः ?

द्वितीयः सम्यक् कुर्वन्ति। छात्राणां लेखने यः कोऽपि अक्षरदोषो भवति, विरामदोषो भवति, व्याकरणदोषो भवति, शैलीदोषो वा भवति तत्सर्वं सुस्पष्टरूपेण शोधयन्ति अध्यापकाः बोधयन्ति च विद्यार्थिनः।

प्रथमः सर्वथा श्लाघनीयोऽयं नियमः। यदि एवमेव सर्वत्र अध्यापका नियमितरूपेण अलेखयिष्यन्, लिखितम् अशोध-

यिष्यन्, अबुद्धं च अबोधयिष्यन् तदा कथं न तेषां छात्रा लेखने कुशला अभविष्यन्? मित्र, चिरं परिश्रामितो भवान्। परन्तु अन्यदपि एकं प्रष्टुमिच्छामि, यदि भवान् अनुचितं न मन्यते।

द्वितीयः सखे! प्रकामं पृच्छ्यताम्। किं नाम अनौचित्यमत्र? अपि तु आनन्द एव मे भवदायैरेभिः प्रश्नैः।

प्रथमः इयं मे जिज्ञासा। तव विद्यालये पाक्षिकी मासिकी वा सभा प्रचलति?

द्वि० आम् प्रचलति पाक्षिकी सभा। सम्यक् प्रकारेण प्रचलति। अहमेव तस्या मन्त्री अस्मि संयोजकश्च।

प्र० तत्र छात्रा अध्यापकाश्च सर्वे सहयोगं ददते?

द्वि० सर्वेऽपि सहयोगं ददते। सर्वेऽपि यथायोग्यं भाषणे, कवितापाठे, निबन्धपाठे, संगीते, संवादे मनोरञ्जने च भागं गृह्णन्ति।

प्र० अपि नाटकमपि कदाचित् अभिनीयते छात्रैः?

द्वि० न केवलं छात्रैः प्रत्युत अध्यापका अपि तत्र भागं गृह्णन्ति।

प्र० अथ पुरुषा एव तत्र स्त्रीरूपेण स्त्रीपाठं कुर्वन्ति उताहो स्त्रिय एव स्त्रीपाठं कुर्वन्ति?

द्वि० नहि, भोः, सति सम्भवे स्त्रिय एव स्त्रीपाठं कुर्वन्ति।

प्र० तर्हि शोभना एषा व्यवस्था। महान् मे सन्तोषः तव विद्यालयस्य अनेन स्वरूपेण।

द्वि० अथ अन्यदपि किञ्चित् प्रष्टव्यं ज्ञातव्यं वा वर्तते?

प्र० नहि भोः न किञ्चिदधिकं प्रष्टव्यं ज्ञातव्यं वा वर्तते।

कालश्च मे अतिक्रामति गन्तुम्। तत् पुनः कदाचित् मिलिष्यावः।

द्वि० भवतु। ममापि कार्यान्तरं वर्तते करणीयम्। तद् उभावपि साम्प्रतं गच्छावः।

# विद्यालय में उत्सव की तयारी

गुरुः भो भो विद्यार्थिनः! यूयं जानीथ यत् परश्वो विद्यालये उत्सवः भविता इति?

छात्राः ओम् सर्वेऽपि जानीमः।

गुरुः तर्हि के के किं किं कार्यं करिष्यथ?

छात्राः भवन्त एव यथायोग्यं कार्यविभागं कुर्वन्तु। तथा सर्वं करिष्यामः।

गुरुः अस्तु। तर्हि अहमेव कार्यविभागं करोमि। गणेश! त्वं द्वारे। स्थित्वा सर्वेषां स्वागतं कुर्याः।

प्रकाश! त्वं सभास्थले आगमनाय मार्गं निर्दिशेः।

आनन्द! त्वं यथोचिते स्थाने नरान् उपवेशयेः।

विनोद! त्वं यथोचिते स्थाने नारीः उपवेशयेः।

श्याम! त्वं सर्वेषाम् उपानहः संरक्षेः।

मुरारे! त्वं पिपासितान् जलं पाययेः।

भानो! त्वं भोजनस्य प्रबन्धं विदध्याः।

मिलिन्द! त्वं अतिथीनां वस्तुषु दृष्टिं निदध्याः। प्रकोष्ठे वा निधाय तालकं लगयेः। रक्षकं वा कमपि नियोजयेः।

मुकुल ! त्वम् न्यूनातिरिक्तं सम्भालयेः ।
दिनेश ! त्वम् अतिथिभ्यः यथायाचितं वस्तु दद्याः ।
अशोक ! त्वम् सर्वदा अतिथीन् आवश्यकीं सेवाम् आपृच्छन् तिष्ठेः ।
छात्रः गुरुवर ! सभासदां उपानद्रक्षाया अपि व्यवस्था कर्तव्या । अन्यथा अनेके अपहरिष्यन्ति ।
गुरुः साधु स्मारितं त्वया । तदर्थं द्वौ सेवकौ नियोक्तव्यौ । एकं स्थानं च निर्देष्टव्यं यत्र सर्वे जनाः स्वे स्वे उपानहौ उन्मुञ्चेयुः ।
ओङ्कार ! त्वम् अशोकपल्लवान् आनीय वन्दनमालिका रचयेः ।
अनूप ! त्वम् नूतननूतनानि पुष्पाणि आनीय मालां ग्रथयेः ।
रवीन्द्र ! त्वम् बृहन्मार्जन्या विद्यालयं सम्मार्जयेः अवकरं च सुदूरे निक्षिपेः ।
नागेश ! त्वम् आस्तरणानि आनीय तानि वितानस्य अधस्तात् विस्तारयेः ।
नकुल ! त्वम् अनावश्यकानि वस्तूनि दृष्टिपथात् अपसारयेः सुगुप्तं च रक्षेः ।
नगेन्द्र ! त्वम् लेपिकां निर्माय रङ्गमयानि पत्राणि लासयेः ।
नरेश ! त्वम् वाद्यानि आनयेः ।
सुधाकर ! त्वम् स्थूलैः सुन्दरैश्च अक्षरैः विज्ञापनपट्टानि लिखेः ।
मुकुन्द ! त्वम् यथास्थानं तानि सूत्रेषु आवध्य अवलम्बयेः ।
चक्रधरः ! त्वम् स्वागतगानं कुर्याः ।
चञ्चरीक ! त्वम् वाद्यानि वादयेः ।
चतुर्वेदिन् ! त्वम् सभापतेः कृते प्रस्तावम् उपस्थापयेः ।
उपाध्याय ! त्वम् प्रस्तावं समर्थयेः ।
अखिलेश ! त्वम् प्रस्तावम् अनुमोदयेः ।
नारायण ! त्वम् सभापतिं मालां परिधापयेः ।

गंगाधर ! त्वम् कार्यक्रमम् उपस्थितं कुर्याः ।

गोर्वधन ! त्वम् गतवर्षस्य विवरणं श्रावयेः ।

गोपाल ! त्वम् तिष्ठतः जनान् उपवेशयेः ।

मदनः ! त्वम् कोलाहलं कुर्वतो बालकान् वारयेः ।

मोहन ! त्वम् सभायां दुष्टबालकान् प्रवेष्टुं न दद्याः ।

मिथिलेश ! त्वम् कानिचित् आसनानि सुरक्षितानि रक्षेः ।

राघव ! त्वम् अनधिकारिण, उच्चासने उपवेष्टुं न दद्याः ।

प्रभाकर ! त्वम् कुशलोऽसि, ध्यानं दद्या यथा कश्चित् वार्तालापं न कुर्यात्, कश्चित् वितानस्य स्तम्भान् न आश्रयेत्, कश्चित् वितानस्य रज्जून् न अवलम्बेत. कश्चित् प्रदीपान् शिरसा न आहन्यात्, कश्चित् गतागतं न कुर्यात्, कश्चित् मार्गमध्ये न उपविशेत् तथा अन्यदपि किञ्चित् अनुचितं न कुर्यात् । गच्छत, यथायथं च कार्याणि अनुतिष्ठत ।

छात्रः गुरो ! पिपासितानां कृते जलपानव्यवस्थापि विधेया इति मे आवश्यकं प्रतिभाति ।

गुरुः शोभनस्ते प्रस्तावः । तद् द्वित्रेषु घटेषु जलं स्थापनीयम् । द्वित्राः पाययितारश्च तिष्ठन्तु । अन्यदपि किञ्चित् करणीयमस्ति ?

छात्रः न खलु । गुरुदेवेन सर्वं निर्दिष्टमेव । गच्छामो वयम् ।

गुरुः गच्छत, सम्पादयत च स्वकीयं स्वकीयं कर्तव्यम् ।

✯

# छात्रावाससम्बन्धी नियम

छात्रः गुरुवर्याः, किञ्चित् निवेदयितुमिच्छामि ।
गुरुः कथय, किं कथनीयं वर्तते ?
छात्रः मम गृहं विद्यालयात् वहुदूरे भवति ।
गुरुः तेन किम् इच्छसि ?
छात्रः छात्रावासे निवासं कर्तुमिच्छामि ।
गुरुः परन्तु अत्र अनेके कठोरा नियमाः पालनीया भवन्ति । पालयिष्यसि ?
छात्रः अवश्यं पालयिष्यामि । के के नियमाः सन्ति ?
गुरुः प्रथमं तु अत्र प्रभाते चतुर्वादने एव उत्थातव्यं भवति । उत्थास्यसि ?
छात्रः अथ रात्रौ शयनं कदा भवति ?
गुरुः दशवादने ।
छात्रः तदा तु अवश्यं चतुर्वादने उत्थास्यामि ।
गुरुः सन्ध्यावन्दनं नियमितरूपेण करणीयं भवति । करिष्यसि ?
छात्रः तत्तु मया पूर्वत एव क्रियते । अत्रापि करिष्यामि ।
गुरुः अथ अत्र योगासनानि अपि साधनीयानि भवन्ति । साधयिष्यसि ?
छात्रः यदि शिक्षयिष्यते तदा अवश्यं साधयिष्यामि ।
गुरुः अत्र विद्यालये छात्रैः श्रमदानमपि करणीयं भवति ।
छात्रः श्रमदाने किं किं करणीयं भवति ?
गुरुः तव विद्यालये श्रमदानं न भवति स्म ?
छात्रः अहं तु नामापि अद्यैव शृणोमि ।
गुरुः एवम् । तर्हि शृणु । अत्र विद्यालये यत् वृक्षरोपणं भवति, कृषिः भवति, मार्गपरिष्कारः भवति, गृहनिर्माणं भवति,

गोसेवा भवति, तत् सर्वं छात्रैः एव स्वकीयेन श्रमेण सम्पादनीयं भवति । अवगतम् ?

छात्रः साधु अवगतम् श्रीमन् । एतत्तु विद्यालयस्य विकासाय परमावश्यकम् , विद्यार्थिनां गौरववर्द्धकं च । तस्मात् अहमपि अवश्यं श्रमदानं करिष्यामि ।

गुरुः धूमपानं ताम्बूलभक्षणं चापि अत्र वर्जनीयं भवति । वर्जयिष्यसि ?

छात्रः इदं तु मया पूर्वंत एव वर्जितम् । अथ चायपानमपि वर्जितं वर्तते ?

गुरुः वर्जितं तु नास्ति परं तस्य स्थाने दुग्धपानमेव अत्र क्रियते । त्वमपि तथैव कुर्वीथाः ।

छात्रः तथैव करिष्यामि । तत्तु अस्माकमेव हितकरम् ।

गुरुः अन्यच्च – वेषभूषा, केशप्रसाधनम्, आहार-विहाराः, क्रीडनम्, गानम्, मनोरञ्जनञ्चेति सर्वमपि नियमानुरूपमेव सेवनीयं भवति ।

छात्रः भ्रमणार्थं वहिः गन्तुं शक्यते ?

गुरुः शक्यते । परं नववादनात् पूर्वं सर्वथा परावर्तनीयं भवति । ततः परं द्वारे पिहिते प्रवेष्टुं न शक्यते ।

गुरुः पुनश्च अत्र सम्बोधनपदानि अपि सुनिश्चितानि सन्ति । तानि एव अत्र प्रयोक्तव्यानि भवन्ति ।

छात्रः तानि कानि सन्ति ?

गुरुः तानि इमानि सन्ति । यथा–अध्यापकेभ्यः गुरुदेव गुरुवर्य इति, छात्रेभ्यः बन्धुवर मित्रवर सखे इति, श्रेष्ठजनेभ्यः श्रीमन्, मान्यवर, महोदय, महाशय इति ।

छात्रः अत्युत्तमः अयं नियमः। एतेन शिष्टभाषणस्य अभ्यासो भविष्यति अस्माकम्।

गुरुः अन्यच्च, अत्र अश्लीलशब्दानाम् उच्चारणम्, गालि-प्रदानम्, अभद्रपदानां व्यवहारश्च सर्वथा वर्जनीयो भवति।

छात्रः यदि कश्चन अभद्रमाचरणं करोति तदा ?

गुरुः तदा अध्यक्षाः संरक्षका वा निवेदनीयाः। न तु अभद्रस्य अभद्रेण उत्तरं देयम्।

छात्रः अन्योऽपि कश्चन विशेषनियमः अस्ति ?

गुरुः आम्, अयमेकः अपरः अपि विशेषनियमो वर्तते यदत्र अधिकाधिकं संस्कृते एव वक्तव्यं भवति।

छात्रः परन्तु येषां प्रथमः प्रवेशः अस्ति ते कथं वदिष्यन्ति ?

गुरुः तेषां कृते 'संस्कृतवाक्यसंग्रह" नामकं लघु पुस्तकमेकं निर्धारितं वर्तते। आदौ तदेव तैः पठनीयं भवति। तेन तेऽपि किञ्चित् संस्कृते वक्तुं पारयन्ति।

छात्रः इयं व्यवस्था शोभना अस्ति। अहमपि तत् पुस्तकं ग्रहीष्यामि।

गुरुः भवतु नाम। यदि इमान् नियमान् पालयितुं शक्नोषि तदा अत्र आगत्य निवासं कर्तुं शक्नोषि। अन्या काऽपि बाधा नास्ति। यथेच्छसि तथा कुरु।

छात्रः विचार्य पुनः आगमिष्यामि, इदानीं गच्छामि। अभि-वादये।

गुरुः चिरं जीव, विद्वान् भव।

# बाजार से सामान लाना

प्रथमः आपणं गमिष्यसि ?

द्वितीयः कथं न गमिष्यामि ? किं कार्यं वर्तते ?

प्र० कतिपयानि वस्तूनि आनेतव्यानि सन्ति ।

द्वि० किं किम् आनेतव्यं वर्तते ?

प्र० प्रथमं तावत् दुग्धम् आनेतव्यं वर्तते ।

द्वि० कियन्मात्रम् ?

प्र० पादमात्रम् । तदेव पर्याप्तं भविष्यति ।

द्वि० कियता मूल्येन लप्स्यते ?

प्र० संभवतः चत्वारिंशता पणैः ।

द्वि० अस्तु, अन्यत् किमपि आनेतव्यं वर्तते ?

प्र० अन्यत् आनेतव्यं वर्तते शर्करा चायपत्रं च ।

द्वि० इदं द्वयं कियत् कियत् आनेयम् ?

प्र० पञ्चविंशत्या पणैः शर्करा, दशभिः पणैः चायपत्रं च ।

द्वि० अस्तु, तर्हि पञ्चसप्ततिः पणानि दीयन्ताम् ।

प्र० स्फुटानि पणानि तु न सन्ति ।

द्वि० तर्हिं रूप्यकं दीयताम् । अवशिष्टानि पणानि परावर्तयिष्यामि ।

प्र० अस्तु, गृहाण रूप्यकम् । शीघ्रं च आगन्तव्यम् । आपणे आपणे आहिण्डनं मा कुर्याः ।

★

# बाजार से खाद्यसामग्री खरीदना

विजयः प्रमोद ! आपणं न गमिष्यसि किम् ?

प्रमोदः गमिष्यामि । आपणं लग्नं भविष्यति ?

वि० अथ किम् ? महान् कलकलः श्रूयते । विलम्वं मा कुरु, वहूनि वस्तूनि आनेतव्यानि सन्ति ।

प्र० कानि कानि वस्तूनि आनेतव्यानि सन्ति ?

वि० प्रथमतस्तु अद्य किमपि शाकं नास्ति ।

प्र० ततः परं प्रातः कालस्य कृते इन्धनं नास्ति, लवणम्अपि न भविष्यति, तण्डुलमपि कदाचित् न्यूनमेव स्यात् । पिष्टकं तु सर्वथा समाप्तमेव वर्तते । द्विदलं वर्तते न वा इति न जानामि । पात्रं निरीक्षस्व । अन्यदपि तैलं घृतं वा निरीक्षणीयं, वर्तते, न वेति ।

प्र० तर्हि सर्वाणि वस्तूनि अद्यैव समाप्ति गतानि सन्ति ।

वि० अत एव त्वां त्वरयामि विलम्वो भविष्यतीति ।

प्र० रूप्यकाणि अपि अनेकानि लगिष्यन्ति । सम्प्रति वस्तूनि महर्घतां गतानि सन्ति । शाकस्तु इदानीं सर्वापेक्षया महर्घः अस्ति ।

वि० शाकः अधिकः महर्घः अस्ति ?

प्र० अथ किम् ? यां महाकोशातकीं कश्चित् आणकद्वयेनापि न पृच्छतिस्म सा इदानीं अष्टाणकैः अपि न लभ्यते । तदा पटोलादीनां का कथा ?

वि० महाकोशातक्याः सम्प्रति ईदृशं महत्त्वं जातम् । तर्हि अहो भाग्यं शाकविक्रेतृणाम् ? तथापि किं करिष्यते ? येनैव लप्स्यते मूल्येन तेनैव मूल्येन क्रेतव्यं भविष्यति । गच्छ, शीघ्रं परावर्तेथाः । विलम्वं मा कुर्वीथाः । रात्रिर्भविष्यति ।

# दो विद्यार्थियों का परस्पर दोषारोपण

गिरीशः गुरो, अवलोक्यताम् ।

गुरुः किं वर्तते ? किं जातम् ? किमर्थं क्रन्दसि ?

गिरीशः मुरारिः मां पठितुं न ददाति ।

गुरुः मुरारे ! कथं न गिरीशं पठितुं ददासि ?

मुरारिः अयमपि मां ह्यः लिखितुं न ददाति स्म । कदाचित् लेखनीं गृह्णाति स्म, कदाचित् मसीपात्रं गृहीत्वा पलायते स्म, कदाचित् मम करं कम्पयति स्म, कदाचित् च मम पत्रमेव हस्तात् अपनयति स्म ।

गुरुः तर्हि कथं न मां त्वं निवेदितवान् ?

मुरारिः असौ निवेदयितुमपि मां न आगन्तुं ददाति स्म । चलिष्यति मयि अनुनयं विनयं च कर्तुं लगति स्म । मम करं धृत्वा उपवेशयितुं लगति स्म ।

गुरुः गिरीश ! तर्हि कस्य दोषः अस्ति ? ह्यः त्वमेव लिखितुं न दत्तवान् अतः अद्य त्वामयं पठितुं न ददाति । प्रथमस्तु तव एव दोषः अस्ति ।

मुरारिः प्रथमतस्तु अयमेव अपराधं करोति । यदा च कश्चित् विनिमये तादृशमेव आचरितुं प्रवर्तते तदा भवतः समीपे आयाति । अयमेव एतस्य स्वभावः अस्ति ।

गुरुः गिरीश ! सावधानतया शृणु । यदि पुनरपि तव ईदृशं अपराधं प्राप्स्यामि, यदि कमपि बालकं लिखितुं पठितुं

न दास्यसि तर्हि भृशं दण्डितो भविष्यसि। पुनरपि करिष्यसि एवम् ?

गिरीशः तर्हि श्रीमन् ? न करिष्यामि।

# विद्यार्थी को चेतावनी

गुरुः मुकुन्द, न मानयिष्यसि, न मौनम् आसिष्यसे ?

मुकुन्दः अहम् किं करोमि ?

गुरुः किञ्चित् न करोषि ? आगत्य दर्शयामि ?

मुकुन्दः अहं तु पाठं चिन्तयामि

गुरुः पाठं चिन्तयसि अथवा कोलाहलं करोषि ?

मुकुन्दः अहं न कोलाहलं करोमि, अयं मुरारिः करोति।

गुरुः किं रे त्वमपि दुष्टो जातः। मया पूर्वं ज्ञातं यत् त्वं भद्र-बालकोऽसि। परन्तु इदानीं तवापि लक्षणानि विपरीतानि दृश्यन्ते।

मुरारिः गुरो अहं न कोलाहलं करोमि। अयं मयि मिथ्या एव दोषारोपं करोति। पृच्छन्तु अन्यान् छात्रान्।

गुरुः मुकुन्द, इतः आगच्छ। त्वं कोलाहलम् अपि करोषि असत्यम् अपि वदसि ?

मुकुन्दः न पुनरेवं कोलाहलं करिष्यामि। क्षम्यताम् इदानीम्।

गुरुः अस्तु, क्षम्यते इदानीम्। परन्तु पुनरपि यदि एवं कोलाहलं करिष्यसि तर्हि भृशं ताडयिष्यामि। श्रुतम् ?

मुकुन्दः श्रुतम् अवधारितं च।

गुरुः पुनः श्रूयताम्। पाठसमये कदापि कलहः कोलाहलः विवादः वा न कर्तव्यः। सावधानतया पाठः श्रोतव्यः चिन्तनीयश्च।

# विद्यार्थियों का कलह

गुरुः गिरीश ! कथं रोदिषि ? किं ते जातम् ?

गिरीशः सुरेशः मम कर्णौ ऐंठितवान् ।

गुरुः सुरेश ! किम् इदं कृतवान् असि ?

सुरेशः गुरो ! अयमेव मां पूर्वं चपेटेन ताडितवान् ।

गिरीशः अयं मम मसीं भूमौ पातितवान् ।

सुरेशः अयं मम पुस्तकं पूर्वं भूमौ पोथितवान् ततः अहमपि अस्य मसीपात्रं पातितवान् ।

गिरीशः श्रूयताम्, यदा अयं माम् अनापृच्छ्य एव मम लिपि-पुस्तिकाया एकं पत्रं विदारितवान् तदा अहं अस्य पुस्तकं पोथितवान् ।

गुरुः सुरेश ! कथं त्वया एव कृतम् ?

सुरेशः अयं मां मार्गे गालिं ददाति स्म । पृच्छतु भवान् । सर्वे श्रुतवन्तः सन्ति ।

गुरुः अहो एतावती दुष्टता ! यूयं प्रतिदिनं मार्गे कलहं कुरुथ ! गच्छत इदानीम् । पुनरपि यदि एवं करिष्यथ तर्हि महान्तं दण्डं प्राप्स्यथ ।

# भूली हुई पुस्तक की खोज

महेन्द्रः मुन्नू ! मम पुस्तकं जानासि, कुत्र वर्तते ?

मुन्नू अहं तु दृष्टवान् अपि नास्मि । कुत्र स्थापितवान् आसीः ?

महेन्द्रः अत्रैव स्थापितवान् आसम् ।

तर्हि तव सहपाठिनः नीतवन्तः भविष्यन्ति । तान् पृच्छ ।

मुन्नू गिरीश ! मम पुस्तकं जानासि ?

महेन्द्रः अहं न जानामि ।

गिरीशः वागीश ! त्वं जानासि ?

मुन्नू अहमपि न जानामि ।

वागीशः त्वं जानासि मोहन ?

मुन्नू अहमपि सम्यक् न जानामि परं आशां करोमि यत् सुरेशः नीतवान् भविष्यति ।

मोहनः कथं ज्ञायते ?

मुन्नू स एव तव पुस्तकं पठन् आसीत् ।

मोहनः आम्, स नीतवान् भविष्यति । परिज्ञातम् । दृश्यताम्, स इत एव आगच्छति । सुरेश । मम किमपि पुस्तकं गृहीतवान् अस्ति ?

मुन्नू किमपि ते पुस्तकं विनष्टं जातं वर्तते ?

सुरेशः ओम् ।

मुन्नू किं पुस्तम् ? अनुवादस्य ?

सुरेशः ओम् ओम् ।

मुन्नू कुत्र स्थापितवान् । आसीः ?

सुरेशः अत्रैव काष्ठफलकस्य अधस्तात् ।

मुन्नू ओम्, अहमेव गृहीतवान् अस्मि । त्वं शून्ये पुस्तकं धृत्वा गतवान् आसीः । कश्चित् चोरयिष्यति इति मत्वा मया गृहीतम् ।

सुरेशः तर्हि धन्यवादाः । अनुगृहीतोऽस्मि ।

मन्नू गृहाण इदम् । पुनरपि एवं न त्यजेः ।

सुरेशः

छात्रा संवाद प्रकरण

# विद्यालय में विलम्ब से आने का कारण

अध्यापिका सुशीले ! अद्य विलम्बात् आगतवती असि।

सुशीला ओम्, विलम्बात् आगतवती अस्मि।

अध्यापिका केन कारणेन ?

सुशीला अद्य गृहस्य सर्वाणि कार्याणि अहम् एव कुर्वंती आसम्।

अध्यापिका त्वमेव ! अथ तव माता ?

सुशीला सा गतदिनात् एव अस्वस्था वर्तते।

अध्यापिका तव ज्येष्ठा भगिनी ?

सुशीला सा इदानीं पतिगृहं गता वर्तते। अतः अहम् एव प्रातः काले उत्थाय गृहं सम्मार्जितवती अस्मि, पात्राणि प्रक्षालितवती अस्मि, पाकशालां लिप्तवती अस्मि, रसवतीं निर्मितवती अस्मि, सर्वान् भोजितवती अस्मि, स्वयं च भुक्तवती अस्मि, तदा गृहात् चलितवती अस्मि, इदानीं च धावं धावं विद्यालयं प्राप्तवती अस्मि।

अध्यापिका तर्हि बहूनि कार्याणि कृतवती असि ?

सुशीला किं करोमि ? मातुः अस्वास्थ्यात् सर्वं करणीयमेव भवति।

अध्यापिका अस्तु, गच्छ कक्षायाम्, अध्ययनं कुरु। यथासम्भवं विलम्बो न कर्तव्यः।

सुशीला बाढम्, यथा आदिशति तत्र भवती।

★

# विद्यालय में उपस्थित होने की चिन्ता

प्रभा — निर्मले ! कथं धावसि ?
निर्मला — विद्यालयं गच्छामि भगिनि !
प्रभा — कथं धावन्ती गच्छसि ?
निर्मला — अद्य विलम्बं कृतवती अस्मि ।
प्रभा — कथं विलम्बं कृतवती ?
निर्मला — पठने लेखने च संलग्ना आसम् ।
प्रभा — इदं तु प्रतिदिनं करोषि ।
निर्मला — परन्तु अद्य विशेषरूपेण कृतवती अस्मि ।
प्रभा — कथम् ?
निर्मला — यतः गतदिने अस्माकं अध्यापिका आदेशं दत्तवती यत् या बालिका श्वः पाठं पठितवती न भविष्यति, लेखं लिखितवती न भविष्यति पद्यं कण्ठस्थं कृतवती न भविष्यति सा भृशं दण्डिता भविष्यति ।
प्रभा — एवम् ?
निर्मला — ओम् । अत एव सर्वं कार्यं कृत्वा इदानीं धावन्ती गच्छामि ।
प्रभा — अथ भोजनं कृतवती ? अभुक्त्वा एव वा गच्छसि ?
निर्मला — अवसर एव नासीत् भोजनं कर्तुम् । मध्याह्ने आगत्य करिष्यामि ।
प्रभा — ईदृशस्ते अध्ययने अनुरागो यद् भोजनमपि परित्यजसि !
निर्मला — नहि, विलम्बकारणात् एवं विहितम् ।
प्रभा — ज्ञातम्, तथापि सावधाना गच्छ । पतिष्यसि खलु ।
निर्मला — बाढम्, अनुगृहीता अस्मि ।

# एक छात्रा से वार्तालाप

अध्यापिका भवत्याः परिचयम् इच्छामि ।
छात्रा अहम् एका छात्रा ( छात्री ) अस्मि ।
अ० कुत्र पठति भवती ?
छा० अहं कन्यामहाविद्यालये पठामि ।
अ० भवत्या निवासस्थानम् ?
छा० मम निवासस्थानं छात्रावासे अस्ति ।
अ० ननु जन्मभूमि पृच्छामि ?
छा० मम जन्मभूमिः महाराष्ट्रप्रदेशे सतारामण्डले अस्ति ।
अ० भवत्याः अभिधानम् ?
छा० मां जनाः निर्मला इति कथयन्ति ।
अ० आं ज्ञातम् । भवती एव एकं पत्रं प्रेषितवती मत्सविधे ?
छा० ओम्, अहम् एव प्रेषितवती ।
अ० तर्हि भवती प्रथमापरीक्षां दातुकामा ?
छा० ओम्. साहस तु कृतवती अस्मि ।
अ० कानिचित् पुस्तकानि पठितवती अस्ति भवती ?
छा० ओम् कानिचित् पठितवती अस्मि ।
अ० कस्मात् ?
छा० पितुः सकाशात् । ते अपि अध्यापकाः सन्ति ।
अ० तर्हि अवश्यं परीक्षां ददातु । अहं यथासम्भवम् अवश्यं भवत्याः साहाय्यं करिष्यामि ।

☆

# साथी को घर ले जाना

प्रथमः एकस्मिन् दिने अहं भवन्तं गृहं नेतुमिच्छामि ।

द्वितीयः किं कश्चित् उत्सवः अस्ति ?

प्र० ओम् , मम कनिष्ठभ्रातुः यज्ञोपवीतोत्सवः अस्ति ।

द्वि० तर्हि भोजनस्य विशेषरूपेण प्रबन्धः स्यात् !

प्र० अवश्यम् । उत्सवेषु तु भोजने वैशिष्टयं भवति एव ।

द्वि० तर्हि अवश्यं चलिष्यामि । किं किं भोजयिष्यति भवान् ?

प्र० किं किं भवते रोचते ?

द्वि० किं सूचीं लिखित्वा ददामि ?

प्र० नहि मौखिकं वक्तव्यम् ।

द्वि० किं किं कथयामि ? ओदनं, रोटिका, शष्कुली, क्षीरान्नम्, अपूपं, मोदकम्, दधि, दुग्धं चेति सर्वमपि रोचते मह्यम् ।

प्र० दधि चिपुटान्नं च नहि ?

द्वि० तदपि, परन्तु यदा चिपुटान्नि कोमलं, दधि च माहिषं तथा समीचीनं भवति तदा एव । अथ च शर्करापि यदि पर्याप्ता स्यात् ।

प्र० एतावन्मात्रमेव तु ? इतोऽपि अधिकं वा ? अथ फलानि न रोचन्ते भवते ?

द्वि० अरे, फलानि तु विस्मृतान्येव ।

प्र० तर्हि फलान्यपि गणयन्तु ।

द्वि० फलेषु आम्रम्, जम्बूः कदली, पनसम्, पेरुकम्, वदरी चेति सर्वाणि मम प्रियाणि । लप्स्यन्ते ?

प्र० नूनं लप्स्यन्ते कानिचित् कालानुसारम् ।

द्वि० धन्यवादाः। तदा तु अहं हिंग्वाष्टकं भक्षयित्वा चलिष्यामि । भवता निश्चितं सूचना प्रेषणीया ।

प्र० न केवलं सूचनाम्, निमन्त्रणपत्रं प्रेषयिष्यामि ।

## घर से आये साथी से कुछ सामान मांगना

श्रीकान्तः श्रुतं मया, त्वं गृहं गतवान् आसीः ?

गोविन्दः ओम्, गतवान् आसम् ।

श्रीकान्तः तर्हि गृहात् किं किं वस्तु आनीतवान् असि ?

गोविन्दः वहूनि वस्तूनि आनीतवान् अस्मि ।

श्रीकान्तः तर्हि कथं गोपायित्वा रक्षसि ?

गोविन्दः गोपितं तु नास्ति । त्वं यथेच्छं सर्वं द्रष्टुं शक्नोसि ।

श्रीकान्तः दर्शनस्य आवश्यकता नास्ति । ग्रहणस्य आवश्यकता वर्तते ।

गोविन्दः गृह्यतां तर्हि । काष्ठपादुकां आनीतवान् अस्मि, नवीनाम् उपानहम् आनीतवान् अस्मि, यष्टिकाम् आनीतवान् अस्मि ।

श्रीकान्तः अरे खाद्यवस्तूनि पृच्छामि । यष्टिकां उपानहं न पृच्छामि । इदं तवैव तिष्ठतु ।

गोविन्दः आम्, खाद्यवस्तूनि अपि आनीतवान् अस्मि ।

श्रीकान्तः कानि कानि वस्तूनि ?

गोविन्दः सक्तवः चिपुटान्नम्, गुडधानाः दधि घृतमित्यादीनि ।

श्रीकान्तः तर्हि सक्तवः मह्यं देयाः । घृतं शर्करां च मिश्रयित्वा यदा सक्तवः भक्ष्यन्ते तदा अतीव रुचिकरं भवति ।

गोविन्दः वाढं, यथेच्छं गृहाण । यदि त्वं सक्तुभिरेव प्रसन्नः असि ।

श्रीकान्तः सखे ! वयमपि तु ग्रामवासीनः एव । सक्तून् अपि कदाचित् भक्षयामः ।

# पुस्तकालय से पुस्तक लेना

छात्रः महोदय ! एकं पुस्तकम् इच्छामि ।

पुस्तपालः किं पुस्तकम् ?

छात्रः "विश्व इतिहास की झलक"

पुस्त० पण्डित जवाहरलालस्य ?

छात्रः ओम् !

पुस्त० का संख्या अस्ति ?

छात्रः संख्यां तु न जानामि ।

पुस्त० तर्हि पञ्जिकायां पश्यतु ।

छात्रः कस्मिन् विभागे इदं पुस्तकं भविष्यति ?

पुस्त० इतिहासविभागे । इदमपि प्रष्टव्यं वर्तते ?

छात्रः अस्तु पश्यामि । नवाधिक-नवशततमा संख्या वर्तते ।

पुस्त० इयन्तु सामान्यसंख्या वर्तते । विशेष-संख्या ?

छात्रः विशेषसंख्या पञ्चषष्ठितमा अस्ति ।

पुस्त० ज्ञातम् । गृहाण इदम् । अत्रैव पठिष्यसि ?

छात्रः गृहं नेष्यामि ।

पुस्त० तर्हि हस्ताक्षरं करोतु अत्र ।

छात्रः दीयताम् ।

पुस्त० सावधानतया पठनीयम् । पुस्तकं छिन्नं भिन्नं विदीर्णं मोटितं मलिनं वा न जायेत । अन्यथा पुस्तकस्य मूल्यं देयं भविष्यति । अवगतम् ?

छात्रः अवगतं श्रीमन् । अहं पुस्तकं सम्यक् रक्षिष्यामि । निश्चिन्तो भवतु भवान् । प्रणमामि ।

# घर जाने के लिये छुट्टी लेना

छात्रः अभिवादये श्रीमन् !

गुरुः आयुष्मान् भव। किञ्चित् निवेदनीयं वर्तते ?

छात्रः गुरो! अद्य अवकाशं कामये।

गुरुः अवकाशम् ? कियतां दिवसानां कृते ?

छात्रः केवलम् एकस्य दिनस्य कृते।

गुरुः किमर्थम् ?

छात्रः गृहे गन्तव्यं वर्तते।

गुरुः किमर्थं गृहं गन्तुमिच्छसि ?

छात्रः किञ्चित् आवश्यकं कार्यं वर्तते ?

गुरुः किं नाम आवश्यकं कार्यं वर्तते ?

छात्रः कानिचित् वस्तूनि आनेतव्यानि सन्ति।

गुरुः कानि वस्तूनि।

छात्रः खाद्यवस्तूनि। वस्त्राणि च कानिचित्। इन्धनं तैलं घृतं च किञ्चित्।

गुरुः किं तव समीपे खाद्यवस्तूनि न सन्ति।

छात्रः न सन्ति।

गुरुः तण्डुलं पिष्टकं वा किमपि नास्ति ?

छात्रः किमपि नास्ति। सर्वं समाप्तं वर्तते सम्प्रति।

गुरुः अरे, किं सक्तवोऽपि न सन्ति।

छात्रः नहि श्रीमन्। अद्य सक्तवोऽपि न सन्ति।

गुरुः तर्हि मम सकाशात् वस्तूनि गृहीत्वा कार्यं संचालय। पुनः अवकाशे गृहं गच्छेः। वस्तूनि च आनयेः। इदानीं गमनेन ते महती पाठहानिः जायेत।

छात्रः यथा आदेशः श्रीमताम् ।

गुरुः आगच्छ, गृहाण यथेप्सितानि वस्तूनि । सङ्कोचं मा करिष्यसि ।

## चिकित्सक से औषध लेना

रोगी महाशय, औषधम् इच्छामि ।

वैद्यः कस्य रोगस्य ?

रोगी प्रतिश्यायस्य ।

वैद्यः कदा ते प्रतिश्यायो जातः ?

रोगी गतदिने ।

वैद्यः रात्रौ भोजनं कृतम् ?

रोगी साधारणं कृतम् ।

वैद्यः शौचशुद्धिः जाता ?

रोगी न तथा, यथा अपेक्ष्यते स्म ।

वैद्यः अस्तु,, इदम् औषधं गृहाण ।

रोगी कियत्यः मात्राः सन्ति ?

वैद्यः षड् म.त्राः सन्ति ।

रोगी कति दिवसानां कृते ?

वैद्यः त्रयाणां दिनानां कृते ।

रोगी इदं कदा कदा ग्राह्यम् ?

वैद्यः सायंकाले प्रातःकाले च ।

रोगी भोजनात् पूर्वं पश्चाद् वा ?

वैद्यः पूर्वम् ।

रोगी कतिवारम् ?

वैद्यः एकैकवारम् ।

रोगी केन वस्तुना ?

वैद्यः मधुना सह ।

रोगी यदि मधु न मिलेत् ?

वैद्यः तर्हि तुलसीरसेन सह ग्राह्यम् ।

रोगी कियता रसेन ?

वैद्यः शुक्तिपरिमितेन ।

रोगी भोजनं कर्तव्यम् ?

वैद्यः इच्छा वर्तते भोजनस्य ?

रोगी साधारणी अस्ति । तीव्रा नास्ति ।

वैद्यः यदि न भुञ्जीथाः, तर्हि शोभनं भविष्यति ।

रोगी तदा दुग्धं ग्रहीतुं शक्यते ?

वैद्यः ओम् , शक्यते । जलं च उष्णमेव पिबेः न तु शीतलम् ।

रोगी कियता कालेन स्वस्थो भविष्यामि ?

वैद्यः शीघ्रमेव स्वस्थो भविष्यसि ।

रोगी मम परीक्षा शीघ्रमेव भवित्री अस्ति । तेन अहं चिन्तितः अस्मि ।

वैद्यः चिन्तां मा कुरु । श्वः परश्वो वा सुतरां स्वस्थो भविष्यसि ।

# परिवार तथा सम्बन्धियों का परिचय

गोपालः मित्रवर, अद्य भवतो गृहे वहवो जना दृश्यन्ते !

आलोकः आम्, इदानीं वहवो जनाः आगताः सन्ति ।

गोपालः कारणं किम् ?

आलोकः मम गृहे कन्याया विवाहोत्सवः आसीत् ।

गोपालः तर्हि उचितमेव एतत् । अथ के इमे सर्वे सन्ति ?

आलोकः एतेषु केचन परिवारस्यैव सदस्याः सन्ति। केचन सम्वन्धिनश्च।

गोपालः परिवारस्य के के सन्ति? परिचयः दीयताम्।

आलोकः एते पञ्च मम भ्रातरः सन्ति। द्वौ ज्येष्ठौ त्रयश्च कनिष्ठाः।

गोपालः इमाः काः सन्ति?

आलोकः इमा मम तिस्रः भगिन्यः सन्ति। एका ज्येष्ठा द्वे च कनिष्ठे।

गोपालः अथ इमाः पञ्च?

आलोकः इमा मम भ्रातृणां पत्न्यः सन्ति।

गोपालः एषा च पार्श्वस्थिता अवगुण्ठनवती का?

आलोकः एषा मदीया..........

गोपालः आम् ज्ञातम्। एषा मम भ्रातृजाया अस्ति। परिचिनोमि किञ्चित्। चिराद् दृष्टा अद्य। अपि कुशलिनी?

आलोकः आम् सर्वा अपि कुशलिन्यः।

गोपालः अथ एते बालकाः? अनेके नूतना दृश्यन्ते।

आलोकः आम्, एते सर्वे मदीया मम भ्रातृणां च पुत्राः सन्ति। कतिपये तु खेलनार्थं गताः। केचन च सुप्ताः सन्ति। वहवः वालकाः सन्ति।

गोपालः अथ वालिकाः कति वर्तन्ते?

आलोकः वालिका अपि न्यूनाः न सन्ति। चतस्रस्तु अत्रैव स्थिताः। पश्यन्तु।

गोपालः महान् परिवारो वर्तते। अथ सम्वन्धिनः के के समागताः?

आलोकः एते सर्वे सम्वन्धिनः सन्ति। गणयन्तु, कति वर्तन्ते।

गोपालः महती संख्या वर्तते। एतेषामपि पृथक् पृथक् परिचयं ज्ञातुमिच्छामि।

आलोकः श्रूयताम्। एतौ द्वौ मम भगिनीपती वर्तेते। इमे च त्रयः भागिनेयाः सन्ति। भागिनेयी च इयमेका।



गोपालः अथ एते युवानः के?

आलोकः एते सर्वेऽपि अस्माकं श्यालाः श्यालपुत्राश्च वर्तन्ते।
गोपालः श्यालभार्या अपि आगताः किम् ?
आलोकः नहि, एषा प्रथा नास्ति। श्यालभार्याः प्रायेण न आगच्छन्ति।
गोपालः अथ एषा स्मेरानना का ?
आलोकः एषा मे लघ्वी श्यालिका। अपि रोचते भवते ?
गोपालः अथ एते उष्णीषधारिणः वृद्धाः के ?
आलोकः एतेषु केचन श्वसुराः, केचन मातुलाः। इमौ द्वौ मातृष्वसुः पितृष्वसुश्च पती वर्तेते।
गोपालः अथ इमा महिलाः का ?
आलोकः इयं मम मातृष्वसा, इयं च पितृष्वसा। एषा मम लघ्वी मातुलानी अस्ति। अस्माकम् आग्रहात् समागता!
गोपालः एतेषां शिशूनामपि परिचयं ददातु। बहु प्रसन्ना दृश्यन्ते।
आलोकः एते सर्वे अस्माकं पौत्रा दौहित्राश्च वर्तन्ते।
गोपालः तर्हि भवन्तो मातामहाः पितामहाश्चापि जाताः सन्ति। महत् सौभाग्यमस्ति!
आलोकः आम्, भवतां कृपया।
गोपालः अथ तेषां यूनां परिचयो न लब्धः। ते के सन्ति ?
आलोकः ते खलु अस्माकं भ्रातरः। केचन मातृष्वसेयाः, केचन पैतृष्वसेयाः केचन मातुलेयाश्च। तेषु केचन प्रतिवेशिनः अपि सन्ति।
गोपालः तर्हि सम्बन्धिनः अपि भूयांसः समागताः!
आलोकः अथापि अनेके दूरवर्तितया अस्वस्थतया कार्यव्यस्ततया च न समागताः। यदि सर्वे आगमिष्यन्, गृहं धर्मशाला अभविष्यत्।

गोपालः मित्रवर, सौभाग्येनैव इदं भवति।

आलोकः भवता अपि अद्य अत्रैव रथीयतां, खाद्यतां, पीयतां, विश्रम्यतां च। तेन अस्माकं महान् प्रमोदो भविष्यति।

## छात्रों द्वारा अपना परिचय देना

अध्यापकः अयि भो विद्यार्थिनः! सर्वे अत्र आगच्छत।

विद्यार्थिनः आदिशन्तु श्रीमन्तः। वयं सर्वेऽपि उपस्थिताः स्म।

अ० यूयं सर्वे छात्राः सर्वेषां छात्राणां परिचयं जानीथ?

वि० नहि श्रीमन्। कोऽपि कस्यापि पूर्णं परिचयं न जानाति।

अ० तस्मादेव अहं युष्माकं सर्वेषां परस्परं परिचयं कारयितुं कामये।

वि० एतत्तु नितरां शोभनम्, आवश्यकं च।

अ० तर्हि सर्वे छात्राः स्वयमेव स्वकीयं परिचयं ददत।

वि० गुरुदेव! परिचये किं किं वक्तव्यम्? केवलं नाम एव?

अ० नहि भोः केवलं नाम्ना एव पूर्णः परिचयः कथं भविष्यति?

वि० तर्हि जन्मभूमेरपि परिचयो दातव्यः।

अ० आम्। जन्मभूमिप्रसङ्गे च कः प्रदेशः, किं मण्डलम्, कः पत्रालयः, किम् आरक्षिस्थानम्, कः ग्रामः इत्यादि सर्वमेव सर्वैः निरूपणीयम्।

वि० बाढम्। तदैव पूर्णतया परिचयो भविष्यति।

अ० अथ च, अत्र कस्मिन् विषये अध्ययनं कर्तुं समागता इत्यपि प्रत्येकं छात्रेण निरूपणीयम्।

वि० तेन सर्वेषां शैक्षिकी योग्यताऽपि ज्ञाता भविष्यति।

अ० साधु बुध्यसे। तर्हि वामभागतः परिचयप्रदानस्य आरंभो भवतु। अहमेव तावद् वामभागे प्रथमः। तस्माद् अहमेव परिचय-प्रदानं प्रारभे।

प्रथमः देवकुमारनामाऽहं भवतां लघुभ्राता। विहारः मम प्रदेशः अस्ति। "हजारीबाग" मण्डलं वर्तते। ग्रामः पत्रालयश्च "जनताजरीडीह" अस्ति। 'अत्र अहं प्रवेशिकाकक्षायां पठामि। वयसा सम्प्रति अहं त्रयोदशवर्षीयः।

द्वितीयः उत्तर-प्रदेशे पूर्वाञ्चलवर्तिनो देवरियामण्डलस्य निवासी अहम्। मम ग्रामः पत्रालयश्च "भवानी छापर" वर्तते। भारतीप्रकाश द्विवेदी इति मदीयं नाम। अत्राहं साहित्य-शास्त्रस्य आचार्यवर्गे अध्ययनं करोमि। वयसा सम्प्रति अहम् अष्टादशवर्षदेशीयो जातः।

तृतीयः विश्वामित्राघमर्षणकौशिक - त्रयार्षेयप्रवरान्वित - कौशिक-सगोत्रः आपस्तम्बसूत्रः यजुश्शाखाध्यायी वेंकट कृष्ण मूर्ति शर्मा अहम्। आन्ध्रप्रदेशे हैदराबाद नगरं मम जन्मभूमिः। वयसा अष्टादशं वर्षं समाप्य सम्प्रति ऊनविंशे वर्षे प्रविष्टोऽस्मि। अत्राहं संस्कृतभाषायाः अभ्यासार्थं समागतोऽस्मि।

चतुर्थः गोपाल शर्मा इति मदीयं लघुनाम अस्ति। अहं मूलतो राजस्थान प्रदेशान्तर्गतस्य झुन्झुनु मण्डलस्य निवासी परं सम्प्रति कलिकात्तानगरे अहं परिवारेण सह निव-सामि। तत एव संस्कृतभाषायां भाषणे लेखने च विशेष-

योग्यतां लब्धुकामः सम्प्रति वाराणसीं समागतोऽस्मि। मदीयं वयः सम्प्रति अष्टादशात् वर्षात् किञ्चिदधिकं वर्तते।

छात्रा मम मूलजन्मभूमिस्तु मध्यप्रदेशे 'मुरैना' मण्डलान्तर्गतः "सबलगढ" नामको ग्रामः। परन्तु मम परिवारो बहुकालात् वाराणस्यामेव निवसति। तस्मात् सम्प्रति अहं वाराणसीनिवासिनी एव। कुसुमकुमारी नाम्नी अहं इन्टर कक्षायाः छात्रा वयसा च पञ्चदशवर्षदेशीया। संस्कृते विशेषव्युत्पत्ति-लाभ.य मया अत्र अध्ययनं विधीयते। एषा च पुष्पानाम्नी मदीया लघुभगिनी!

छात्रा अञ्जलि श्रीवास्तव इति मदीयं नाम वर्तते। मिर्जापुर मण्डलस्य फरहदा नामके ग्रामे मम मौलिको निवासः। परं सम्प्रति अहं वाराणस्याम् एव सूर्यकुण्डे स्वपरिवारेण सह निवसामि दशमकक्षायां च पठामि। मदीयं वयः चतुर्दशवर्षपरिमितं सम्प्रति।

## घर की दूरी के सम्बन्ध में

गुरुः मोहन! त्वं विद्यालये तिष्ठसि अथवा गृहं गच्छसि आगच्छसि च?

मोहनः गृहं गच्छामि आगच्छामि च।

गुरुः प्रतिदिनम्?

मोहनः आम्, परन्तु आवश्यतानुसारं यदा कदा विद्यालयेऽपि तिष्ठामि ।

गुरुः विद्यालयात् तव गृहं कियत्सु क्रोशेषु अस्ति ?

मोहनः द्वयोः क्रोशयोः ।

गुरुः तर्हि वहुदूरे नास्ति ।

मोहनः अत एव प्रतिदिनं गन्तुम् आगन्तुं च शक्यते ।

गुरुः यदि द्विचक्रिका अभविष्यत् तर्हि गमनागमने तव महती सुविधा अभविष्यत् ।

मोहनः आम्, क्रेतुं विचारः अस्ति ।

गुरुः मुरारे ! तव गृहं कति क्रोशाः ?

मुरारिः पञ्च क्रोशाः । अत एव अहं छात्रावासे एव तिष्ठामि । द्वौ क्रोशौ तु अहमपि चलितुं शक्नोमि ।

गुरुः कुमार ! त्वं कथय, तव गृहं कियद्दूरम् ?

कुमारः मम तु विद्यालयात् सन्निहितमेव पूर्वस्यां दिशायाम् । तस्मात् मम गमनागमनचिन्ता नास्ति ।

गुरुः केशव ! तव गृहं समीपे वर्तते दूरे वा ?

केशवः मम गृहं क्रोशार्धे अस्ति ततः किञ्चिद् दूरे वा ।

मोहनः तर्हि भवतामेव सुखं वर्तते । मम तु भाग्ये प्रतिदिनं धावनमेव लिखितं विधात्रा ।

गुरुः अरे कथं विधातारम् आक्रोशसि ? धावनेनैव तव ईदृशं स्वास्थ्यं वर्तते ।

छात्रः :: गुरो ! अथ भवतां गृहं कियद्दूरे ! अद्यापि वयं न जानीमः !

गुरुः मा पृच्छत। सुदूरं मम गृहं बहुमार्गं च। इतो धूम्-शकटेन पञ्चविंशति क्रोशान् गत्वा ततो वसयानेन दश क्रोशान् गच्छशि। तदनन्तरं पदयात्रा प्रारभ्यते। सप्त अष्टौ वा क्रोशान् पादाभ्यां गच्छामि ततो गृहं प्राप्नोमि।

छात्राः तदा दूरात् दूरतरं भवदीयं गृहम्! मार्ग-परिवर्तनं च बहु करणीयं वर्तते!

गुरुः मार्गश्च मम वक्रो भवति। प्रथमं वामहस्तेन गत्वा पुनः दक्षिणहस्तेन गम्यते। अनन्तरं किञ्चिद् दूरं सम्मुखं गत्वा पुनः वामेन गन्तव्यं भवति।

छात्राः तर्हि भवतां गमने आगमने च बहु असौविध्यं वर्तते!

गुरुः आम्, बहु असौविध्यं वर्तते! परं किं करणीयम्? दूरवर्तिनाम् एषा एव दशा भवति।

छात्राः गुरुवर्य! परन्तु यदि वयम् एतावतः एव कष्टात् भीता भविष्यामः तदा कथं दूरं दूरं गमिष्यामः कथं च विदेश-यात्रां करिष्यामः?

गुरुः सम्यक् कथयसि। न खलु अस्माभिः कष्टात् भेतव्यम्। यदि वयं सुखं समृद्धि सौभाग्यं यशः सम्मानं च काम-यामहे तर्हि कष्टादपि कष्टतराणि कार्याणि कर्तुं सर्वैरपि अस्माभिः सन्नद्धैः भवितव्यम्।

# अशुद्धिपत्र

( पाठकगण इस पत्र के अनुसार कृपया पुस्तक का संशोधन कर लेंगे )

| पृष्ठ | पङ्क्ति | अशुद्ध पद | शुद्ध पद |
|---|---|---|---|
| ७ | ४ | स्मण | स्मरणं |
| १२ | १५ | किममि | किमपि |
| १८ | २२ | हस्तंपादौ | हस्तपादं |
| २० | ६ | " | " |
| २४ | १८ | सम्प्रोक्ष्य | सम्प्रोञ्छ्य |
| ३० | १४ | शक्येत | शक्ष्यन्ते |
| ४२ | १७ | द्रक्ष्यसि | द्रक्ष्यति |
| ५५ | १० | रज्जून् | रज्जूः |
| ५७ | १८ | प्रेवष्टं | प्रवेष्टुं |
| ६४ | १३ | अस्ति | असि |
| ६५ | १० | लिसवती | लिप्तवती |
| ६८ | १३ | चिपुटन्नि | चिपुटान्नं |
| ६९ | २२ | अतीत्व | अतीव |
| ६९ | २४ | ग्रामवासीनः | ग्रामवासिनः |
| ८० | ३ | गच्छिशि | गच्छामि |
| [illegible]० | १३ | गुरुवर्थं | गुरुवर्यं |

—:❀:—

# आवश्यक सूचना

जो लोग सरलता शीघ्रता एवं मनोरंजक के साथ स्वयं संस्कृत सीखना चाहें तथा अपने बालक-बालिकाओं को भी सिखाना चाहें वे कार्यालय द्वारा प्रकाशित साहित्य—पुस्तकें तथा पोस्टर—मंगा कर अपनी अभिलाषा पूर्ण करें, यह विनम्र निवेदन है। कृपया आज ही सूचीपत्र के लिये लिखें।

पता निम्नलिखित है—

व्यवस्थापक

**सार्वभौम संस्कृत प्रचार कार्यालय**

डी. ३८।११० हौजकटोरा, वाराणसी